

डॉ. रामशरणशास्त्रिविरचितम्

# ॥ व्याकृतिकल्पराजम् ॥

पाणिनीयप्रयोगप्रदर्शनपरं गद्यकाव्यम्

मुख्यपृष्ठगतरेखाचित्रविवरणम्—

कौशाम्बीतः प्राप्ते शुङ्गवंशीयानां राज्ञां काले (ईशोर्जन्मनः प्राक् प्रथमशताब्द्याम्) विनिर्मिते मृत्फलके वासवदत्तोदयनयोर्यौगन्धरायणेन सह पलायनचित्रणम् ।

रेखाङ्कनकारः —

डॉ० ए० एल० श्रीवास्तव, लिडिल रोड, प्रयाग ।

# व्याकृतिवत्सराजम्

## सिद्धान्तकौमुदीस्थपाणिनीयसूत्राणां प्रयोगप्रदर्शनपरं

## वत्सराजीयवृत्तान्तात्मकं

### गद्यकाव्यम्



( कारक-समास-स्त्रीप्रत्यय-तद्धित-कृदन्त प्रकरणानि )




रचयिता

(स्व०) डॉ० रामशरण त्रिपाठी, शास्त्री

एम० ए० (हिन्दी-संस्कृत) पी-एच० डी०, काव्यतीर्थ





संपादकः सहलेखकश्च

डॉ० गयाचरण त्रिपाठी






श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

प्रयागः

१९९०

Rashtriya Sanskrit Sansthan

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**

•

**Ganganatha Jha Kendriya Sanskrit Vidyapitha TEXT SERIES**

•

No. 26

# Vyākṛti-Vatsrājam

*( A prose romance based on the story of Udayana illustrating the application of Pāṇinian sūtras in Sanskrit language following the order of Siddhānta-kaumudī )*

*Composed by*

**Dr. Ramsharan Tripathi, Shastri**
M. A. Ph. D. Kāvyatīrtha

*Co-authered, posthumously edited and brought out by*

**Dr. G. C. Tripathi**



**ALLAHABAD**

# व्याकृतिवत्सराजम्

( गद्यकाव्यम् )

•

रचयिता

(स्व०) डॉ० रामशरण त्रिपाठी, शास्त्री

•

सम्पादकः सहलेखकश्च

डॉ० गयाचरण त्रिपाठी



गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

प्रयागः

## FOREWORD

In placing the *Vyākṛti-Vatsarājam*, a prose romance of superb literary merit, in the hands of our learned readers, I have a sense of deep personal satisfaction : personal because the work was composed by my late Father Dr. Ramsharan Shastri of the *Kaumudī-Kathākallolinī*–fame and is being issued posthumously now, 12 years after his sad demise.

The present novel describes the interesting exploits of Udayana and, especially, his son Naravāhanadatta, following basically the line of story as narrated in the *Kathāsaritsāgara*—that famous Sanskrit abridgement of the Bṛhatkathā of Guṇāḍhya which has provided plots to a number of literary works in Sanskrit The *Vyākṛti-Vatsarājam* was composed sometime during 1964-66. I am not sure of the exact date of its composition, since I had left India towards the end of 1962 for Germany and could return only in the beginning of 1967. By that time the manuscript of this work had already been sent to the proprietors of Chowkhambā Vidyā Bhawan who had expressed their desire to publish it. It first languished there for seven to eight years till at last the publishers requested my Father to supply a Hindi translation to this work. This was also done in 1972; but owing to some internal troubles the publishers could not take up its publication and finally returned it to me after repeated requests in the beginning of 1984. I am grateful to the authorities of Rashtriya Sanskrit Sansthan and ts Publication Commitee for allowing it to be taken up in the ublication programme of this Vidyapeetha.

The *Vyākṛti-Vatsarājam* is, so to say, a stepping-stone to e larger and more scholarly work of the author named *aumudī-Kathākallolinī* which was published by the Chowhambā Vidyā Bhavan of Varanasi in the year 1961. A umber of scholars thereupon approached Father with the quest and suggestion to compose a less scholarly and simpler

work for the beginners through witch they could have an easy access to the *Kaumudī-Kathākallolinī*. This smaller and simpler work was to correspond mainly to those portions of the *Laghu-* and *Siddhānta-Kaumudīs* which are normally prescribed in the curriculum of Master's course in Sanskrit in Indian Universities. The *Vyākṛti-Vatsarājam* is an outcome of such requests.

The *Kaumudī-Kathākallolinī* of Dr. Ramsharan Shastri seeks to illustrate all the *sūtras* of Paṇini according to their order in the *Siddhānta-Kaumudī* and shows their actual usage in Sanskrit language. The inspiration behind it has certainly been the *Bhaṭṭi-Kāvyam* but whereas the Bhaṭṭi-Kāvyam follows the line of Aṣṭādhyāyī and does not treat Sanskrit grammar exhaustively or systematically, the *Kaumudī-Kathākallolinī* is both systematic and exhaustive. The *Vyāṛti-Vatsarājam* takes up only the five *prakaraṇas* of Sanskrit grammar namely Kāraka, Samāsa, Strī-pratyaya, Taddhita and Kṛdanta. The Prakaraṇa of *Strī-pratayaya* is combined with that of Samāsa. The work is thus divided into 4 Vilāsas which are devoted to one prakaraṇa each.

The story of Udayana and Naravāhanadatta contains some of the most interesting situations, incidents and episodes of Indian fairy tales. The running Hindi translation provided in the second part of this book shall help the reader in comprehending the work better and in removing his eventual doubts about the vocabulary and the grammatical structure of the Sanskrit text. The appendices supplied in the end of the book shall also lead to a better exploitation of the text material.

I hope that the book shall be received well by young scholars of Sanskrit who can definitely improve their knowledge of Sanskrit language (both grammar and literature) by working through this interesting novel.

G.N. Jha Kendriya Sanskrit Vidyapeeth
Allahabad-2

**G. C. Tripathi**
*Principal*



डॉ० रामशरण त्रिपाठी शास्त्री (१९०८-१९७७ ई०)

# प्रस्तावना

## वाक्तत्त्वविशारदः श्रीरामशरणशास्त्री तदीयं व्याकृतिवत्सराजश्च

डा० चन्द्रभानु त्रिपाठी
(इलाहाबाद-स्नातकमहाविद्यालये संस्कृतविभागाध्यक्षचरः)

अनादिनिधनाक्षरब्रह्मोपासकस्य साहित्याम्भोधिमन्दरायमाणस्य दर्शन-काननकेसरिणः ज्योतिर्विज्ञानविशारदस्य बहुपाठिनोऽपि त्रिपाठिनः शास्त्रिणो रामशरणस्य जन्म उत्तरप्रदेशराज्यस्य बाँदाजनपदान्तर्गते, अनुयमुनम् अवस्थिते, मरका-नाम्नि ग्रामे १९०८ तमे ख्रीष्टाब्देऽभवत् ।

अस्य महानुभावस्य पूर्वपुरुषाः कान्यकुब्ज (कन्नौज)-देशात् परमारवश्यानां क्षत्रियाणां भक्ति पुरस्कृत्य तैः सह यमुनाकूलवर्तिनि असोथर-नाम्नि राज्ये आगत्य तत्रैव चिरं न्युषितवन्तः । इमे कश्यपगोत्रजा विद्वांसः परमारक्षत्रियाणामेषां कुलगुरव आसन् । पश्चात्तु कैश्चित् परमारराजकुलैः इमे यमुनायाः दक्षिणे भागे आनाय्य, द्वादशक्षत्रियग्रामाणां पौरोहित्यं च तेभ्यः प्रदाय ते मरका-ग्रामे वासिताः । अस्य पितामहो ज्योतिर्विद्याचणो भूमिष्ठद्रव्यज्ञाने लब्धप्रतिष्ठोऽभूत् । तस्यात्मजस्त-दनुरूपगुणः पितुरेवाधीतसमस्तविद्यः सदाशयस्त्रिपाठी गिरिधारीप्रसादः पञ्च पुत्रान् लेभे, तेष्वयं चतुर्थोऽभूत् ।

अस्याग्रजो व्याकरण - साहित्य - दर्शनादि विविधशास्त्रेष्वकुण्ठितमतिः सरस्वतीदत्तवरो मुक्तादत्तस्त्रिपाठी एतदीयः आद्यो गुरुरासीत् । स्वकीयमिमग्रजं श्रीशास्त्रिमहोदयः विविधासु रचनासु सश्रद्धं प्रणमति—

नम्रमेह····भ्रात्रे ममाद्यगुरवे श्रीमुक्तादत्तविदुषे स्तात् ।

श्रीमुक्तादत्तस्त्रिपाठी मध्यप्रदेशीयरायपुरमण्डलान्तर्वर्तिनि राजीवलोचनाख्ये (राजिम) पुण्यक्षेत्रे संस्कृतमहाविद्यालयस्य प्रधानाध्यापक आसीत् । तत्रैव उषित्वा बालेन रामशरणेनापि साहित्यव्याकरणयोः प्रारम्भिकं ज्ञानमवाप्तम् ।

तदनन्तरं चास्याग्रजः इमं जौनपुरमण्डलान्तर्गत-'उकनी' ग्रामेऽवस्थिते श्रीभोलानाथ-संस्कृतमहाविद्यालये प्राचार्यपदमलंकुर्वाणस्य महापण्डितश्रीतात्या शास्त्रितोऽधीतविद्यस्य श्रीजयदेवमणित्रिपाठिनः सविधेऽन्तेवासित्वेन प्रेषयामास। तत्रायं पञ्चवर्षैः कौमुद्यादिमहाभाष्यान्तान् व्याकरणग्रन्थान् अन्यांश्च न्याय-वेदान्तसाहित्यादीनि शास्त्राणि सम्यक्तयाधीतवान् । एषां गुरुचरणानां सच्छिष्यत्वं प्रथयतानेन बहुशस्ते प्रणामाञ्जलिना संतर्पिताः । व्याकृतिवत्सराजे गुरुपुत्रेण सह तेभ्यो नमस्कारो विहितो वर्तते[1] । 'सरलज्योतिर्विज्ञानं' तु तेन तेभ्य एव उत्सृष्टम्। सिद्धान्तादर्शे[2], वेदान्तसारेऽपि[3] च ते सश्रद्धं नमस्कृताः ।

एतदनन्तरं चित्रकूटस्थे श्रीरामनाम - संस्कृतमहाविद्यालये (अक्षयवटस्थे) स सेवावृत्तिं स्वीचकार। त्रीणि वर्षाणि तत्राध्यापनं विदधता तेन 'सरलज्योतिर्विज्ञानं'-नाम हिन्दीभाषात्मकं छन्दोबद्धं ग्रन्थरत्नं व्यरचि यस्य क्रमशः प्रकाशनं तत्रत्याम् आश्रमपत्रिकायामभूत् । अस्य विद्यालयस्य प्रबन्धकः, तस्य तदानींतनः शिष्यः, इदानीमपि स्वकीयोपाध्यायस्य दिव्यस्य गौरवपुषः, माधुर्यविनयादिगुणोपेतस्य चरितस्य, तस्य वैदुष्याः, शास्त्रार्थचातुर्यश्च स्मरति ।

निरन्तरं विद्याभिगृध्नुरयं तदनन्तरं स्वेच्छया सेवावृत्तिं परित्यज्य काव्यतीर्थोपाधिप्राप्तये नागपुरं नाम नगरं गतवान् । तत्र वर्षद्वयम् उषित्वा, साहित्यशास्त्रस्य गभीरमध्ययनं च विधाय तेनायम् उपाधिः प्रथमश्रेण्यां समासादितः । तत आगत्य स्वकीयेन भ्रात्रा सार्द्धं श्रीराजीवलोचनसंकृतविद्यालयेऽध्यापयतानेन न्यायमुक्तावल्याः 'बालबोधिनी'तिनाम्नी टीका, कौमुद्याः परिष्कारभागं तद्गतशास्त्रार्थादिविषयं च परिगृह्य सिद्धान्तादर्श-नामा ग्रन्थो विरचितः ।

प्राच्य-पाश्चात्यशिक्षानुरोधी महानुभावोऽयं तदनन्तरं पञ्जाबविश्वविद्यालयेन सञ्चालितां शास्त्रिपरीक्षामुत्तरीतुं लाहौर-नगरं प्रतस्थे । द्वाभ्यां वर्षाभ्यां

---

१. नन्नमेह पाणिनये गुरवे श्रीजयदेवमणये चापि ।
विद्वन्मालामणये गुरुजश्रीरामशिरोमणये स्तात् ।।

२. नमस्कृत्योकनीसद्गून् गुरूनथ वृषाकपी ।
कौमुदीविपिने छात्रान् व्याख्यामार्गं प्रदर्शये ।।

३. माधवोमाधवौ नत्वा काशीकल्पोकनीगुरून् ।
टीका वेदान्तसारस्य रच्यते भावबोधनी ।।

समापनीयं शास्त्रिपरीक्षापाठचक्रमं वर्षेणैकेनैव परिसमाप्य स १९३३ तमे ईशवीये वर्षे शास्त्रिपरीक्षायां सर्वप्रथमं स्थानमवाप । तत्रत्ये 'सनातनधर्मकालेज' नाम्नि महाविद्यालये कञ्चित्कालमध्याप्य स राधास्वामीसम्प्रदायस्य धर्मगुरूणां श्री-साहबजीमहाराजमहाभागानां प्रार्थनामूरीकृत्य आगरामण्डलस्थे दयालबाग-नाम्नि नगरे 'राधास्वामी-शिक्षासंस्थान' इत्यत्र हिन्दीसंस्कृतविषययोः प्राध्यापकत्वेन नियुक्तिमङ्गीचकार । १९३८ तमे ख्रीष्टाब्दे स बाँदाजनपदस्थ 'गिरवाँ' ग्रामस्य ग्रामण्यः श्रीरामप्रसादमिश्रस्य अष्टादशहायनीं रामदासीतिनाम्नीं कन्या-मुदूढवान् ।

आगरानगरे निवसता तेन दैवदुर्विपाकान् महत् पारिवारिकं कष्टमनुभूतम् । अष्टवार्षिकमेव गार्हस्थ्यसुखं प्रदाय, तस्मै पुत्रद्वयं कन्यकां चैकां समर्प्य, तस्य प्रिया पत्नी क्षयरोगेण १९४६ तमे वर्षे स्वर्गता । सुहृद्भिः पुनर्विवाहार्थमनुरुध्य-मानोऽपि स तेषां निर्बन्धमनङ्गीकृत्य मातृविरहितान् त्रीन् शिशून्, पाकादिकं सर्वमपि गृहकार्यं स्वयमेव सम्पादयन् पालयामास, तांश्च न केवलं पितृस्नेहेन अपि तु मातृस्नेहेनापि समयूयुजत् । तस्य गुरुकल्पस्य ज्येष्ठभ्रातुः श्रीमुक्तादत्तत्रिपाठिनः, अन्यस्य चापि भ्रातृद्वयस्य निधनमपि एतस्मिन्नेव कालांशे बभूव । किन्तु एतत्सर्वमपि धैर्यधनं तं कर्मयोगिनं स्वकीयात् कर्त्तव्यमार्गात् प्रच्यावयितुं न शशाक । १९४८ तमे ख्रीष्टाब्दे तेन हिन्दीसाहित्यमवलम्ब्य, १९५२ तमे च वर्षे संस्कृतमवलम्ब्य आगरा-विश्वविद्यालयतः प्रथमश्रेण्याम् एम० ए० परीक्षे उत्तीर्णे । एतादृश्यामेव विषमायां परिस्थितौ स १९५१–५२ वर्षयोः 'संस्कृत रचनानुवादरत्नाकर'नामानं ग्रन्थमपि प्रणीतवान् ।

एकोनविंशतिवर्षपर्यन्तं दयालबाग - नगरेऽध्याप्य, ज्ञानगरिमगरिष्ठान् विपुलांश्च शिष्यान् समुत्पाद्य स १९५३ तमे ईशवीये वर्षे मुरादाबादनगरवर्तिनि के० जी० के० स्नातकोत्तरमहाविद्यालये संस्कृतप्रवक्तृपदे नियुक्तोऽभूत् । महाविद्या-लयस्य संचालकमहोदयात् श्रीशम्भुनाथखन्नामहोदयाल्लब्धभूयिष्ठप्रतिष्ठस्तेषां कुलगुरुगौरवमावहन्, महाविद्यालये संस्कृतमध्यापयन्, बहूनि वैदुष्यमण्डितानि ग्रन्थरत्नानि च प्रणयन् सा प्रायो विंशतिवर्षपर्यन्तं तत्र ससुखं कालं निनाय । सदानन्दविरचितस्य वेदान्तसारस्य भावबोधिनीतिनाम्न्यौ संस्कृत - हिन्दीटीके, 'कौमुदीकथाकल्लोलिनी' नामा पाणिनीयप्रयोगदर्शकः प्रबन्धश्च तेनास्मिन्नेव काले

निरमायि। उभयमपि क्रमशः १९५४, १९६१ ख्रीष्टाब्दयोः 'चौखम्बा विद्याभवन' इतिनाम्न्या वाराणसीस्थया प्रकाशनसंस्थया प्राकाश्यं नीतं वर्तते।

सुतद्वयं कन्यका चेदानीं कैशोर्यं प्राप्तवन्तः आसन् अतः स स्वकीयायाः सारस्वतसाधनायाः कृतेऽधिकतरं समयमवाप्तवान्, समयस्यास्य सदुपयोगश्च तेन बहुविधशोधनिबन्धरचनायां काव्यनिर्माणे च कृतः एतस्मिन्नेव समये स शोधोपाधिकृते "ब्रह्मसूत्रप्रमुखभाष्यपञ्चकसमीक्षणम्" इति विषयमधिकृत्य १९६२ तमे ख्रीष्टाब्दे आगराविश्वविद्यालयतः पी-एच० डी० पदवीमप्यवाप्तवान्। शोधप्रबन्धस्तु अनेन गीर्वाणगिराऽगुम्फि। आगराविश्वविद्यालयीयेषु शोधप्रबन्धेषु ऐदंप्राथम्येन प्रस्तुतोऽयं गीर्वाणवाणीग्रथितः शोधप्रबन्धः। अयमपि प्रबन्धः 'चौखम्बा संस्कृतसिरीज़-ऑफिस' इत्यतः १९७२ तमे वर्षे प्रकाशितो वर्तते।

१९६२ तमे ख्रीष्टाब्दे तस्य ज्येष्ठः पुत्रः शर्मण्यदेशीयां शोधछात्रवृत्तिमवाप्य विदेशं गतवान्। द्वितीयः पुत्रस्तु प्रथममेव मुरादाबादनगरादन्यत्र (सागरे, खड्गपुरे वा) अधीयान आसीत्। एवं तनूजामात्रसहायः स प्रायशः एकाकी एव भगवद्भक्तो स्वीयं कालं यापयामास। विविधानि ललितानि स्तोत्राणि, स्वकीयज्येष्ठपुत्रवियोगदुःखपरं 'पितुः परिदेवितम्' नामकं खण्डकाव्यं च तेनास्मिन् कालावधौ निरमीयन्त। 'मोतियाबिन्दु' नामक चक्षूरोगपीडितः सन् स किमप्यधिकं रचयितुं नैव शशाक। अस्मिन्नेव काले (१९६३ तमे वर्षे) तस्य द्वितीय पुत्रः प्रयागविश्वविद्यालये मनोविज्ञानविभागे प्रवक्तृपदे नियुक्तोऽभूत् येनास्य महान् प्रहर्षः समजनि।

"व्याकृतिवत्सराजम्" इति नाम्नः प्रकृतग्रन्थस्य प्रणयनं तेन कदाचिच्छनैः शनैः १९६५–६६ तमयोः ख्रीष्टाब्दयोः कृतम्। अयं ग्रन्थस्तु तस्य 'कौमुदीकथा कल्लोलिनी' नाम्नो गद्यकाव्यस्य सोपानतया विरचितः। सुकुमारमतीनां कृते कौमुदीकथाकल्लोलिनी सुतरां दुरधिगमा इति कृत्वा तेन बालानां कृते अयमपरः सरलतरो ग्रन्थो विरचितः, यमधीत्य जनाः निर्बाधं कल्लोलिन्यामवगाहनक्षमाः स्युः। मुख्यतस्त्वयं ग्रन्थः आंग्लविद्यालयेषु संस्कृतमधीयानानां छात्राणां कृते निर्मितोऽस्ति। आंग्लपद्धत्या प्रवर्तितेषु विश्वविद्यालयेषु स्नातकोत्तरपाठचक्रमे प्रायः सिद्धान्तकौमुदीतः कारक-समास-कृदन्त-तद्धित-प्रकरणानि निर्धारितानि भवन्ति। एतत्प्रकरणचतुष्टयान्तर्भुक्तानामेव सिद्धान्तकौमुदीसूत्राणां, स्त्रीप्रत्ययप्रकरणस्य च केषाञ्चित् सूत्राणां, प्रयोगान् एतद्ग्रन्थरत्नं प्रदर्शयति।

१९७१ तमे वर्षे स्वकीयायाः कन्यकायाः विवाहविधिं निर्वाह्य, एवं गार्हस्थिकीमितिकर्त्तव्यतां च समवाप्य, अस्यामेव समायां जूनमासे के. जी. के. स्नातकोत्तरमहाविद्यालयाल्लब्धावकाशः सन् स स्वकीयजीवनस्य सांध्यवेलां तीर्थराजे प्रयागे व्यतियापयामास यत्र तस्य द्वितीयः पुत्रः संयुक्तराज्येभ्यः शोधोपाधिं गृहीत्वा प्रतिनिवृत्तः सन् विश्वविद्यालये प्रवाचकपदे नियुक्त आसीत् । अत्रैव निवसता तेनास्य व्याकृतिवत्सराजस्य हिन्दीभाषयानुवादोऽपि विहितो येन बालानां कृतेऽयं ग्रन्थः सुखावबोधः स्यात् ।

सार्द्धपञ्चवर्षाणि यावत् ससुखं प्रयागवासं कृत्वा सदाशयः, उदारचेताः, धैर्यशाली, कृपालुश्च अयं महानुभावः १९७७ तमवर्षस्य दिसम्बरमासि शिवसायुज्यमवाप । अयं संस्कृतसेवी विपश्चिन्न केवलं पाण्डित्येन अपि तु स्वकीयैः स्वभावजन्यैर्मानवीयैर्गुणैरपि अन्यानतिशेते स्म । मनसापि तेन कदापि कस्याप्यहितचिन्तनं नैव कृतम् । सर्वदैव यथाशक्ति अन्येषां साहाय्यमाचरितम् । विधुरेऽपि काले तेन धैर्यं न परित्यक्तम् । आशाभिलाषरहितः, स्वल्पमेव बहु मन्यमानः स्वकीयजीवननिर्वहणमात्रवृत्तिः, सन्तोषधनोऽयं साधुर्ब्राह्मणस्यापरिग्रहत्वं, तितिक्षां, वैदुष्यभास्वरत्वं च सुस्पष्टं स्वीयेन चरितेन निदर्शयामास ।

इयत्कालावधौ गुरुवर्येणानेनाध्याप्य कृतसंस्कारा अनेके कृतविद्याः शिष्याः स्वविद्यागुरोर्वंशवृक्षं फलितं कुर्वाणाः दीपाद् प्रवर्तिता दीपा इव प्रकाशन्ते, प्रकाशयन्ति चार्थान् । तेषु त्रयो भारतवर्षीयेषु विश्वविद्यालयेषु संस्कृतविभागाध्यक्षपदानि समलङ्कुर्वन्ति ।

अध्ययनाध्यापनाभ्यां ब्राह्मणवृत्तिं निर्वहता महाविदुषानेन रचिताः, टीकिताः शोधविषयीकृताश्चेमे ग्रन्था अस्याक्षुण्णामक्षय्यां च कीर्तिमावहन्ति । ग्रन्थप्रणयनक्रमप्रदर्शनाय कोष्ठके तेषां प्रथमप्रकाशनख्रीष्टाब्दोऽपि लिख्यते—

१. सरलज्योतिर्विज्ञानम्, पद्यमयी रचना (१९३९)
२. रचनानुवादरत्नाकरः, छात्राणां व्याकरणज्ञानवर्धको ग्रन्थः (१९५२)
३ वेदान्तसारस्य भावबोधिनीहिन्दी-संस्कृत टीका (१९५२)
४. कौमुदीकथाकल्लोलिनी, कौमुदीपद्धत्या व्याकरणज्ञानार्थं गद्यकाव्यम् । (१९६१)
५. ब्रह्मसूत्रप्रमुखभाष्यपञ्चकसमीक्षणम् (१९७२)

६. व्याकृतिवत्सराजम्, पाणिनीयप्रयोगानुविद्धवत्सराजकथा, (प्रकृतग्रन्थः)

त्रयोऽप्रकाशिताः सन्ति—

१. न्यायमुक्तावल्याः बालबोधिनी व्याख्या ।

२. सिद्धान्तकौमुद्याः राजीवलोचनी व्याख्या अपूर्णा ।

३. सिद्धान्तादर्शः, सिद्धान्तकौमुद्याः शास्त्रार्थप्रक्रिया विवेचनम् ।

पत्र-पत्रिकासु प्रकाशिता अनेके प्रकीर्णश्लोकाः, गम्भीरविषयेषु शोधपूर्णाः लेखाः, व्रजभाषायां हिन्दीभाषायां चानेकानि पद्यानि अस्य कीर्तिं विशदां कुर्वन्ति । संस्कृतश्लोकरचनापटुरयं प्रायः स्वीयं संस्कृतज्ञं मित्रवर्गं प्रति संस्कृतमयमेव पत्रमलिखत् । कविशिरोमणिनानेन रचितः श्लोकोऽयं बाँदा-जनपदे गिरवाँ-ग्रामं निकषाऽवस्थिते खत्रीपर्वते विराजमानाया विन्ध्यवासिनीदेव्याः मन्दिरे सम्प्रत्यपि उत्कीर्णो वर्तते—

शिवदास्यपि या कमला
विश्व्यपि खत्र्यद्रिविन्ध्यनगनिष्ठा ।
अवतु सदा वसुहस्ता
सापर्णा नोऽन्नपूर्णापि ।।

अस्य पञ्चत्रिंशदर्थाः स्वोपज्ञाः एकस्मिन् लघुपुस्तके प्रकाशिता वर्तन्ते । एवं व्याकृतिवत्सराजस्य मङ्गलाचरणात्मकोऽयं श्लोकोऽपि मननीयोऽस्ति—

मान्दीतमोऽपनयना नयनाभिरामा
रामा रमारमणनाभिसरोजभूतेः ।
भूतेर्गिरां वितरणे तरणे सहाया-
हायार्णवे च भवताद् भवतापनुत्तौ ।।

भगवत्परायणस्य विद्याचणस्य श्रीरामशरणस्य रामदासीत्यन्वर्थाख्या धर्मपत्नी दाम्पत्यजीवनस्याष्टवर्षाण्येवानेन सह चरित्वा परमेश्वरेच्छया स्वस्नेहस्य सौभाग्यस्य, श्रद्धायाश्च मूर्तिरूपास्तिस्रः सन्ततीः (द्वौ पुत्रौ, एकां कन्याञ्च) एतस्मै समर्प्य भूयोऽप्येनम् प्राप्तुमन्तककानने तपश्चरितुमगच्छत् । तस्याः वियोगे शास्त्रिणः करुणैवेत्थं काव्यत्वमागता—

'दासी' होते हुये रही जो घर की रानी ।
हमें छोड़कर चली गई, रह गई कहानी ।।

अस्यामेव रचनायामग्रे तेन लिखिता इमाः पङ्क्तयोऽपि प्राप्यन्ते— 'सम्प्रत्येवमपीच्छा समुदेति यद् गले शिलां बद्ध्वा यमुनाम्भसि जलसमाधिं करवाणि, परमबोधशिशूनां मुखमवलोकयन्निदमपि कर्तुं न पारये ।'

धन्येयं धैर्यधनस्य धारिता । एवमन्तर्भूतघनव्यथोऽयं महानुभावस्तत्र समर्पितासु तत्प्रतिमाभूतास्त्रासु पितृत्वमिव मातृत्वमप्यतनुत । तेनावाप्तपितृप्रीति-प्रतीति-सन्ततिरेषा सन्ततित्रयी वितनोति श्रद्धा-विश्वासात्मनोः वैकुण्ठवासिनोः पित्रोः परमां मुदम् । सुतयोर्ज्येष्ठः श्रीयुतगयाचरणः पितुरेव समस्तसंस्कृतवाङ्मय-मधीत्याधीती प्राच्य-पाश्चात्यविद्याभेदेषु देश-विदेशयोर्विश्वविद्यालयेषु तन्वानः पैतृकीमध्यापनपरम्परां, प्रयागस्थे गङ्गानाथझा-केन्द्रीय-संस्कृतविद्यापीठे प्राचार्य-पदमलङ्कुरुते । कनिष्ठस्तनयः श्रीयुतरमाचरणः प्रयागीये विश्वविद्यालये मनोविज्ञानविषयाध्यक्षो वर्त्तते । सौभाग्यवती अपर्णाभिधाना सुताऽपि काश्यां श्रीवसन्तकन्यामहाविद्यालये मनोविज्ञानविषये प्रवक्तृपदं सुशोभयति । इति विद्यया वपुषा चोद्भूता महाविदुषोऽस्य वंश्यावली सततमेधमानाऽस्ति । जीवनस्य तृतीयाश्रमे वर्तमानेन प्रयागमधिवसता, संस्कृतवाङ्मयस्य विविधान् ग्रन्थांश्चावर्तयता 'यावज्जीवमधीते विप्रः' इति ब्राह्मणधर्मं चरितार्थयता दिसम्बर-मासे १९७७ तमे ख्रीष्टाब्दे विपश्चिदपश्चिमेनानेन शब्दब्रह्मणः सायुज्यमवापि । पार्थिवशरीरनाशेऽपि सुकृती रससिद्धः शब्दशरीरोऽयं साम्प्रतमपि विद्वन्मानस-धरातले, सन्ततिहृदयाकाशे च जीवत्येव—

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ।।

विद्याव्यसनी, धैर्यधनी, सौम्यस्वभावः, मधुरवाक्, शुभ्रवासाः शास्त्रिवर्यो विदुषां स्नेह-सम्मानपात्रमासीत् । विद्वत्सु बद्धादरस्यास्य कथाकल्लोलिनीमुपक्रम्य पण्डितप्रकाण्डेन श्रीनिवासशास्त्रिणा 'सूर्यप्रभा किं वा वैभवपिशाचः' नाम्नि स्वोपन्यासे निम्नलिखिता आर्या प्रशस्तिरूपेणोल्लिखिता

दीक्षितपदानुयाता व्याकरणक्षीरपूरिता वितता ।
कल्लोलिनी सुललिता शैर्ग्राह्या रामशरणस्य ।।

मयाप्येकस्मिन् चारुचरितप्रबन्धे कल्लोलिनीमधिकृत्य आर्याद्वयी गुम्फिता ।

कौमुदीव मनोरम्या व्याकरण-सूत्रोदाहरण संयुक्ता ।
भावतरङ्गेष्वस्याः प्रवाहितः सुधीजनो भवति ॥
शब्दार्णवं दुस्तरं मत्वाऽवगाहन्ते न ये छात्राः ।
सरसशब्द - जलराशिः कथाकल्लोलिनी तेभ्योऽपि ॥

संस्कृतसाहित्यस्य लेखकेष्वन्यतमेन डा० कपिलदेवद्विवेदिना स्वग्रन्थे अर्वाचीनकविषु विद्वन्मूर्धन्यस्यास्य व्यक्तित्व-कृतित्वविषये काश्चित् पङ्क्तयः समुल्लिखिताः ।

इदानीं प्रस्तुतस्य व्याकृतिवत्सराजस्य समीक्षणमारभ्यते —

'व्याकृतिवत्सराजम्' इति नाम्नैवायम् आख्यानग्रन्थो व्याकरणबोधकः । तथैवास्य व्याख्यानमिष्यते —व्याक्रियन्ते = व्युत्पाद्यन्ते शब्दा अनया विद्यया वि + आ √कृ + क्तिन् इति व्याकृतिः । वत्सराजम् अधिकृत्य कृतमाख्यानमपि वत्सराजम् अभेदोपचारात् । व्याकृतेर्बोधकम् इति व्याकृतिबोधकम् तच्च वत्सराजम् इति शाकपार्थिवादेराकृतिगणत्वादत्रापि पूर्वसमासोत्तरपदस्य 'बोधकम्' इत्यस्य लोपः । देवब्राह्मणवदस्य सिद्धिर्विज्ञेया । एवमत्र ग्रन्थे व्याकरणज्ञानपूर्वकं वत्सराजस्याख्यानं वर्तते, इति पर्यवस्यति । तेन पाठकाः सुललितेनाख्यानाध्ययनेन साकं व्याकरणज्ञानमनायासेन कुर्वन्ति इत्यस्य वैशिष्ट्यम् ।

अस्मिन् ग्रन्थे चत्वारो विलासा वर्तन्ते—प्रथमः कारकनिर्देशात्मकः, द्वितीयः समास-स्त्रीप्रत्ययनिर्देशात्मकः, तृतीयः समास-तद्धितनिर्देशात्मकस्तथा चतुर्थः कृदन्तनिर्देशात्मकः । प्रथमे त्रयः समवेत्य पूर्वार्धभागम् अन्तिमश्चोत्तरार्धमंशं पूरयन्तीति विभागशो ज्ञेयम् । कारक-निर्देशादि नामकरणं तदुदाहरणबाहुल्येन कृतमिति ग्रन्थस्याध्ययनेन विज्ञायते ।

कारकविलासोऽष्टादशपर्णात्मकः । अत्र वत्सराजस्याख्यानं वासवदत्ता-विवाहपर्यन्तं वर्तते । प्रायः सर्वेषां कारकाणामुत्सर्गाणामपवादानाञ्च सुष्ठु, प्रयोगोऽक्रियत कविपुंगवेन शब्दशास्त्रविदा । यथा अनुपसर्गस्य क्रुधधातोर्योगे चतुर्थी सोपसर्गस्य च द्वितीया—'तस्मै क्रुध्यद्भिः' ( पृ० ६ ), 'तम् अभिक्रुध्य' ( पृ० ४ ) । केचन कर्मप्रवचनीयसंज्ञका दुर्बोधा अपि प्रयोगाः कृताः यथा 'अनु एनम्' ( पृष्ठ ९ )

अत्र हीनार्थे अनुयोगे कर्मप्रवचनीयत्वाद् द्वितोया। एवं 'परि अलौकिकशक्तेः' (पृष्ठ १०), अत्र कर्मप्रवचनीयसंज्ञकस्य 'परि' उपसर्गस्य योगे पञ्चमी वर्तते। 'स्रिमस्याः सीमायाः, स्थितेषु च सिमकेषु' (पृष्ठ १५) इदमुदाहरणद्वयं 'षष्ठी चानादरे' इति सूत्रस्य साधु सन्दर्शितम्।

द्वितीयः समास-स्त्रीप्रत्ययबोधको द्वादशपृष्ठात्मको विलासः। अस्मिन् अव्ययीभाव-तत्पुरुषाख्यसमासद्वयस्योदाहरणानुविद्धं स्त्रीप्रत्ययप्रयोगबाहुल्यं वर्तते। कथा च पद्मावतीविवाहानन्तरं वत्सदेशसमृद्धिवर्णनपर्यन्तमस्ति। अत्रापि सुधी-शिरोमणिरयम् सूक्ष्मेक्षिकया प्रयोग-प्रबन्धमकरोत्। एकमत्रोदाहरणं पाटवं प्रकटयितुमलम्—'चिरंजीवकायै शुभंयिकायै आर्यिकायै' (पृष्ठ २१)। अत्र क्रमशः इत्त्वाभावः, नित्यमित्त्वम्, वैकल्पिकमित्त्वं च ज्ञेयम्। 'सूत्या-भुजिष्या' (पृष्ठ २५) इति चापः उदाहरणरूपौ प्रयोगौ अपि वेद्यौ। 'अखिलाश्नीतपिबतप्रीतिभोजनादौ' (पृष्ठ २६) इत्यत्र 'आख्यातमाख्यातेन क्रियासातत्ये' इत्यनेन समासो बोध्यः। एकोनत्रिंशत्तमे पृष्ठे स्त्रीप्रत्ययमात्रस्य सप्तविंशतिरुदाहरणानि कवेरसाधारणीं प्रतिभां व्यञ्जयन्ति।

समासतद्धितनिर्देशात्मकस्तृतीयो विलासः पञ्चविंशतिपर्णात्मकोऽस्ति। वासवदत्तेयनरवाहनस्य मदनमञ्चुकापरिणयं यावत्कथाविस्तारोऽत्र विद्यते। बहुव्रीहि-द्वन्द्व-द्विगु-समासान्त-समासाश्रयप्रयोगप्रकृष्टः तद्धित-तत्त्व-महत्त्व-प्रकटन-परोऽयं विलासः सहसा पाठकानां मन आवर्जयति। व्याकरणशास्त्रमात्र-प्रसिद्धाः 'कल्याणवाणीप्रमाणैः' (पृष्ठ ३३), 'अर्थधर्मौ' (पृष्ठ ३४), 'अस्तुङ्कारः' (पृष्ठ ३५), 'दूडाशम्' (पृष्ठ ३७), 'नरवाहनदत्तीयः' (पृष्ठ ४३), 'प्रत्बुरसम्' 'प्रियाकान्तः' (पृष्ठ ४६), 'दिविस्पृशम्' (पृष्ठ ४८), 'ऐतदायिनो' (पृष्ठ ५०), 'दैशान्' (पृष्ठ ५३), 'तादायनिना' (पृष्ठ ५४) प्रभृतयः समास-तद्धितयोः साधुप्रयोगाः कवेः प्रतिभाया निदर्शनानि सन्ति।

अन्तिमः कृदन्तनिर्देशाभिधानो विलासः त्रिपञ्चाशत्पर्णात्मको बहुविधकृत्य-कृत्प्रत्ययान्तप्रयोगप्रकटीकृतकविवाग्वैभवोऽस्ति। कथा चात्र ऋषभाचले नरवाहन-दत्तस्य महाभिषेकपर्यन्तं काव्यं पूरयति। वाग्विदां वरेण प्रयोगप्रवणेन पण्डित-तल्लजेन पूर्ववदत्रापि यथास्थानं प्रसिद्धोदाहरणैः सहाप्रसिद्धप्रयोगपाटवं प्रस्फुटी-कृतम्। अप्रसिद्धप्रयोगेषु कतिपयान्येवोदाह्रियन्ते —

'भुवेलिमम्' ( पृष्ठ ५७ ), 'उपसर्या' (पृ० ५८)' 'जुष्यम्' (पृ० ५९), 'आखेये' (पृ० ६१), 'पश्यम्,' 'ददः' (पृ० ६२), 'हायनी', 'सरकः' (पृ० ६३), 'हस्तिघ्नः' (पृ० ६५), 'पूनधना' (पृ० ६९), 'भित्तीकृत', 'वित्तीकृत' (पृ० ७१), 'पवमानः' (पृ० ७८), 'सांराविणे' (पृ० ९०), 'सव्यधः' (पृ० ९४), 'प्रघण' 'उपघ्न' 'निघत' 'लब्धिम' 'अनुप्त्रिम' 'उद्घम्' (पृ० ९७) 'अजीवनिः' (पृ० १०२), क्षणतर्षम्' (पृ० १०६), 'मुखतःकारम्' (पृ० १०८), एतैर्दिङ्मात्रोदाहरणैरस्य वैयाकरणकवेरधीतिबोधाचरणप्रचाराः स्वत एव लक्ष्यन्ते।

व्याकरणविदयं शब्दप्रयोगनिपुणः कविरासीत्। तेनास्मिन् गद्यकाव्ये काव्यगुणानां प्राचुर्यं दृश्यते। वासवदत्तां दग्धां श्रुत्वा वत्सराजस्य शोकः करुणरसत्वमाप्तः सन्नेवमभिव्यक्तो भवति–'हा प्रिये ! क्व मामशरणं त्यक्त्वा गता ?........, इत्युच्चैरुच्चरन् दिक्षु विदिक्षु च विलिखितामिव, चक्षुषोः उत्कीर्णामिव, हृदये निखातामिव वासवदत्ताम् आह्वयमानः........तद्वियोगज्वालावलीढः प्राणपरित्यागप्रवणो बभूव (पृ० २४)।

गद्ये सौष्ठवमादधतो यमकालङ्कारस्य प्रयोगे पटीयान् कविः यथावसरं स्वीयं कौशलं प्राकटयत्। दिङ्मात्रमुदाह्रियते—'अधरीकुर्वन्तम् अर्वन्तम्' ( पृ० २ ) 'अभंगुरशुभंयुता विकासमये समये'(पृ० ३),'दारसुखविधुविधुन्तुदारुन्तुदः'(पृ० ६८)।

एवं विरोधालङ्कारेण सह संसृष्टेरुदाहरणम्—'अवशीभूताऽपि विद्याधरवशीभूता गोवशीभूता शापवशीभूता इह जनुषि वशीभूता' (पृ० १६)। अत्र 'वशा' शब्दस्य वन्ध्या, स्त्री, हस्तिनी, पारवश्यम् इति पर्याया बोध्याः।

अनुप्रासच्छटा तु पदे पदे विद्यते। उदाहरणद्वयं पर्याप्तमस्ति—'वल्लीपल्लवतल्लजनिजवल्लभसुहृद्भिल्लपल्लीं समया समयाचकार' (पृ० १७), 'आढचङ्करणी शरणीकृतबहुहरिणी रमणीयतरुणी' (प० २२)।

विरोधाभासस्यापि प्रयोगाः यथास्थानं कृताः कविवरेण यथा—'सवृषलीमपि अवृषलीम्,' 'सत्सुपदीमपि पङ्गूम्' ( पृ० २९ ), 'अपतिघ्नीमपि पतिघ्नीञ्चकार' ( पृ० ६६ )।

अस्योपमा-वैशद्यमेकेनैवोदाहरणेन स्पष्टं भवति। सोमप्रभा सख्याः कलिङ्गसेनायाः प्रवयसा प्रसेनजिता सह विवाहप्रस्तावं श्रुत्वाऽचकथत्—

'पलितेन तेन सह युवत्यास्ते संयोगो हिमशुभ्रेण हेमन्तेन पद्मिन्याः संयोग इव भविष्यति ।' (पृ० ४१)

काश्चन सूक्तिमुक्ता अपि अस्य काव्यस्य महिमानं गरिमाणं च वर्धयन्ति: एकमुदाहरणमत्र समीचीनमस्ति—'धर्मतत्त्ववेदिनां हृदयानि सर्वदा धार्मिकजनानुवृत्त्यभिमुखानि भवन्ति' (पृ० २) ।

व्याकरण-साहित्यविद्याविद्योतितान्तः सम्यग्वेत्ता साधुप्रयोक्ताऽयं मनीषी बहुशब्दविदभूत् । पद्मावत्या सहोदयनस्य परिणयानन्तरं मगधाधिपेन विहिते भोज्यसम्भारे नामग्राहं व्यञ्जनजातं वर्णयताऽनेन बहुज्ञत्वं सम्यग्वेदितम् (पृ० २५) । यमके, विरोधाभासे चापि शब्दज्ञान-प्रयोगकौशलं प्रत्यक्षं भवति ।

सुकुमारमतीनां शब्दार्णवतीर्थावतारिणां सुखबोधायास्य गद्यकाव्यस्य स्वोपज्ञहिन्दीभाषाटीकाऽपि व्यरचि ग्रन्थकृतेति तदीया पाठकेषु प्रीतिर्वर्ण्यते ।

एवं व्याकृतिवत्सराजाभिधानमिदं गद्यकाव्यं शब्दमर्मजिज्ञासूनाम्, साहित्यरसास्वादमभिलषतां शब्दकोषसङ्ग्रहेच्छूनां विदुषां विद्यार्थिनाञ्चोभयेषां समीहितसाधकमित्यनवद्यविद्याधरीकृतविद्याधरस्य, गुरुकृपासमवाप्तसारस्वतवित्तवितरणप्रवणस्य, पदवाक्यप्रमाणाम्बुधिपारावारीणस्य, श्रीमद्रामचरणैकशरणस्य श्रीमतो रामशरणस्य शास्त्रिणः शब्दोपवनविहारिणः कृतिरेषा विदुषां मुदमातनोतु चिरमिति शम् ।

●●

॥ श्रीः ॥

# व्याकृतिवत्सराजम्

## पाणिनीयप्रयोगानुविद्धवत्सराजवृत्तान्तः

—•••—

## कारकनिर्देशात्मकः प्रथमो विलासः

*नान्दीतमोऽपनयना नयनाभिरामा*
*रामा रमारमणनाभिसरोजभूतेः ।*
*भूतेर्गिरां वितरणे तरणे सहाया-*
*हायार्णवे च भवताद्भवतापनुत्त्यै ॥*

*नन्जमेह पाणिजये गुरवे श्री जयदेवमणये चापि ।*
*विद्वन्मालामणये गुरुजश्रीरामशिरोमणये स्यात् ॥*

*अथ वत्सराजोत्पत्तिः*

**1. अस्ति वत्सेषु कौशाम्बीनाम नगरी[1] । तस्यां पाण्डवान्वयसम्भवो विष्णुमतीपत्नीकः शतानीको नाम राजा[2] अभूत् । पत्न्या सह स विस्रब्ध-व्याहारविहारैः बह्वीः निशाः[3] व्यतियापयामास किन्तु गतेष्वपि बहुषु वत्सरेषु तनयमुखावलोकनसौभाग्यभोगभाग्यवान् नाभवत् । अतः विषकल्पान् ऐहिकेन्द्रियार्थान्[4] भुञ्जानः स एकदा सुताभावखेदखिन्नचेताः स्वजवेन**

---

१-२. 'प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमा' । ३. 'गतिबुद्धि-प्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' । ४. 'तथायुक्तं चानीप्सितम्' ।

गरुत्मन्तमपि अधरीकुर्वन्तम् अर्वन्तम्[1] आरुह्य परनिरासनपरशरासनवरकरः परन्तपः समन्ततः शकुन्तरवनिरन्तरदिगन्तरम् अखिलमृगकुलशरण्यम् अरण्यम् मृगयार्थं गतः, तत्रत्येन स्वतपःप्रभावोपार्जितालौकिकशक्तिना शाण्डिल्यमुनिना सह परिचयम्[2] चालभत ।

2. धर्मतत्त्ववेदिनां हृदयानि सर्वदा धार्मिकजनानुवृत्त्यभिमुखानि भवन्तीति निजदर्शनोपारूढप्रौढपुलकप्रकटितान्तःप्रीतिं भूपतिं समवलोक्य समुपजातहर्षो महर्षिः तम्[3] एतदपृच्छत्—महाभाग, कतमं त्वं महापुरुषवंशम् आत्मोत्पत्त्या स्पृहणीयतां नीतवान् असि; किंनिमित्तं च कोटरोदरनिमग्नदावाग्निमुर्मुर इव महाद्रुमः सान्तस्ताप इव लक्ष्यते भवान्? यदि नातिरहस्यं, श्रवणार्हं च अस्मद्विधानाम् तदा सर्वम् आचक्ष्व ।

3. इत्थं कुतूहलाकृष्टेन महर्षिणा पृष्टो भूपतिः स्वकीयाधिहेतुम् एवं तम्[4] अवोचत्—भगवन् सकलदुःखितप्राणिवत्सलानां प्रकृत्या[5] परोपकारप्रवणप्रवृत्तीनां भवादृशां किम् अश्रवणार्हं वर्तते ? एष विज्ञापयामि—

4. 'अहं पाण्डवान्वयसम्भवः भूयसा विभवेन सेनापरिच्छदेन भूयस्या च प्रभुसत्तया समेतो भूपतिः शतानीको नाम । अविकला मे त्रिवर्गसम्पत्तिः, अनुद्वेजको राज्यचिन्ताभारः, आकीर्णाश्च महीस्पृहणीया भोगाः, प्रीतिदायिनो महोदयाः । एवं जीवलोकस्य सर्वथा रमणीयत्वात् न मानवसाध्यम् अपरं किमपि सुखम् अवशिनष्टि यस्मै[6] मनो मदीयं स्पृहयेत् । पुत्राभावदुःखमेव तु एकं माम् अहर्निशं बाधते । अतः समस्तम् एतद् राज्यम् किं बहुना इदं शरीरम् अपि ध्रियमाणं न मे सुखावहम् इति धिङ् माम्[7] अतिपापिनम् अपुत्रिणम् अधन्यम् !'

5. एवमुक्तवति पार्थिवे तत्क्षणमेव मुनिः समाधिमास्थाय अनतिचिरेण उन्मुद्रितेक्षणः अतिप्रहृष्टो भूपतिम् उवाच—'राजन् भुक्तभूयिष्ठम् अधुना ते अनपत्यताकष्टम् इति मनसि धृतिम् आधेहि । अतः परं स्वल्पमपि विषादं मा गाः ।

---

१-२. 'कर्मणि द्वितीया' । ३-४. 'अकथितं च' । ५. 'प्रकृत्यादिभ्य उपसंख्यानम्' । ६. 'स्पृहेरीप्सितः' । ७. धिग्योगे द्वितीया ।

यथोपलब्धास्मदाश्रमातिथ्यं स्वीकुर्वाणः अद्य रात्रौ इमम्[1] एव आश्रमम् अधिवस । यत् तुभ्यं[2] रोचते तत्सम्पादयितुं श्वोऽहं यतिताहे ।'

6. एतदाकर्ण्य राजा सविनयाबद्धकरसम्पुटः सर्वं तत् स्वीकृत्य तस्यां निशि तदाश्रमम्[3] अध्यास्त । महर्षिरपि च अपरेद्युः अमरावतीकल्पाम् कौशाम्बीं भूपतिना सह आगतः । तत्र तेन[4] पुत्रेष्टिं यज्ञं कारयित्वा तस्य पत्नीं मन्त्रपूतं चरुं[5] प्राशयन् उवाच—'राजन् अचिरेणैव त्वं भुवनत्रयख्यातयशसम् आत्मजं लप्स्यसे । इदानीम् अनुजानीहि मां गन्तुम् । मया हि जम्बुद्वीपवर्तिषु प्रधानतीर्थेषु गन्तव्यमस्ती'त्यभिधाय सम्वृतवल्कलांशुको मुनिः आकाशगमनसाधनीं विद्याम् उपांशुकं जपन् आसनादुत्थितो यथेष्टं ययौ ।

7. इतश्च अधिकाधिकं दानव्रतादिसन्मार्गम् अभिनिविशमाना[6] यथासमयम् अन्तर्वत्नी शतानीकपत्नी अभंगुरशुभंयुताविकासमये समये सहस्रानीकनामानं सूनुं सुषुवे । शतानीकश्च तेन अमितां मुदमादधानः अतिक्रान्तशैशवस्य विविधशास्त्रोपशास्त्राकूपारपारदृश्वनः स्वपुत्रस्य सहस्रानीकस्य राजकृत्वा निश्चिन्तो बभूव ।

8. एवमतिक्रामत्सु दिवसेषु निर्जरसाम् असुरैः सह संग्रामः सम्वृत्ते इति तुरासाहा साहाय्येच्छया स्वकीयः सारथिः मातलिः शतानीकान्तिकं प्रेषितः । अतः नृपतिः मन्त्रिमुख्यस्य युगन्धराख्यस्य सेनापतिप्रधानस्य सुप्रतीकाभिधानस्य च अभिभावकत्वे निहितस्वसूनुसाम्राज्यशासनः अपरपाकशासन इव करधृतशरासनः सूरंमन्यान् असुरान् संग्रामे संहर्तुं सत्वरं मातलिना सह अमरावतीम् आजगाम । तत्र च सहस्राक्षप्रत्यक्षमेव धरातुराषाट् सांयुगीनः शतानीकः उत्पतत्कबन्धबन्धुरे समरे अगणितान् असुरान् तत्साहाय्यसहितान् अहितान् यमदंष्ट्रादींश्च यमदंष्ट्रातिथीन् विधाय सहयुध्वा स्वयमपि महाध्वाध्वनीनः सँवृत्ते इति मातल्यानीतवीतासुदेहं प्रियतमम् आलोक्य प्रियपतिवियोगा-

---

१. 'उपान्वध्याङ्वसः' । २. 'रुच्यर्थानां प्रीयमाणः' । ३. 'अधिशीङ्स्थासां कर्म' । ४. 'हृक्रोरन्यतरस्याम्' । ५. 'गतिबुद्धिप्रत्यवसानार्थ०' । ६. 'अभिनिविशश्च' ।

नलम् अनलापेक्षया अधिकतरम् असह्यं मन्वाना देवी विष्णुमती तमन्वगात् । राजश्रीश्च सहस्रानीकम् अशिश्रियत् ।

9. अथ विपक्षविजयोत्सवे वासवेन मातलिं प्रेष्य अमरपुरम् आकारितः सहस्रानीकः अपत्नीकः नन्दनोद्याने क्रीडतो नितान्तकान्तकान्तान् अमरान् अवलोक्य स्वोचितभार्यार्थी सशोक इव प्रतीयमानः विज्ञाततदाशयेन मघोना उक्तः—'राजन् विषादेन अलम्; अवश्यमेव तव इयं वाञ्छा पूर्तिमेष्यति, यतो हि त्वदर्थं विधिना निर्मिता तवानुरूपा भार्या क्षितौ अयोध्यायां राज्ञः कृतवर्मणस्तनया मृगावती नाम्ना समुत्पन्ना । सैव च त्वदीया भामिनी भाविनी' । एवं वासववाक्येन अतितुष्टो नरपतिः अमरपतिसत्कृतिं स्वीकृत्य मातलिना सह स्वपुरीं[1] प्रति प्रतस्थे । गच्छन्तं तं तिलोत्तमा अप्सराः प्रीत्या किंचिद्विवक्षया ईषत् प्रतीक्षितुम् आचकाङ्क्ष किन्तु मृगावतीसंलग्नमना न मनागपि भूपतिरवदधे इत्यनुभूतावमानना विमनास्तिलोत्तमा तम्[2] अभिक्रुध्य एवं शशाप यत् 'हे राजन्, यया हृतमनाः त्वं मदीयं वचो नावधत्से तस्याः चतुर्दशवत्सरान्[3] तव वियोगो भविष्यति' । इमं च शापं मातलिरेव शुश्राव न नरपतिः । स तु मनोरथेन अयोध्याम्, रथेन च कौशाम्बीम् उपगम्य वासवोक्तं सर्वं मृगावतीसम्बद्धम् अत्यौत्सुक्येन युगन्धरादिभ्यो निजमन्त्रिभ्यः अभिदधानः तस्याः प्राप्त्यै क्षणमपि अनल्पकल्पमिव मन्वानः तां याचितुम् अयोध्यां कृतवर्मणः समीपे प्रैष्यं प्रैषयत् । सोऽपि च निजपत्न्या सह सम्मन्त्र्य स्वानुरूपकृतोत्सवमङ्गलोद्वाहविधिना कान्तालकान्तां सुतां मृगावतीं सहस्रानीकाय ददौ ।

10. परस्परस्पर्द्धितप्रेमपूर्वकं रममाणयोः तयोः दिवसाः व्यत्येतुं प्रववृतिरे । अस्मिन् एव अन्तरे तन्मन्त्रिषु युगन्धरस्य यौगन्धरायणः, सुप्रतीकस्य रुमण्वान् , नर्मसुहृदश्च वसन्तकः इतीमे पुत्राः समुत्पन्नाः । कतिपयैरेव च दिवसैः[4] नृपपत्नी अपि अन्तर्वत्नी समजायत । तस्याश्च असृक्पूर्णलीलावापीनिमज्जनाय दोहदः समुदपद्यत । अतः स्वप्रियतमायाः ताम् इच्छां पूरयितुं नृपतिः लाक्षादिरसनिर्भराम् एकां वापीम् असृक्पूर्णाम् इव कारयामास ।

---

१. 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि । २. 'क्रुधद्रुहोरुपसृष्टयोः कर्म' । ३. 'कालाध्वनोरत्यन्तसंयोगे' । ४. 'अपवर्गे तृतीया' ।

किन्तु तस्यां स्नान्तीं राज्ञीम् आमिषाशंकया गरुडान्वयजः कोऽपि अण्डजः अकस्मात् कस्माच्चित् निपत्य, आदाय उत्पपात। पतत्त्रिणा[1] तथा अपहृतां स्वप्रियामालोक्य वाचा[2] विकलस्य इव क्षणं निःस्तब्धं स्थितस्य तस्य नृपतेः चेतना अपि, ताम् अनुपदम् अन्वेष्टुमिव, निर्गता इति लूनपक्षजीनपर्क्षी इव विसंज्ञः क्षितपतिः क्षितौ क्षिप्तोऽभूत्। क्षणानन्तरम् अवाप्तसंज्ञे च तस्मिन् व्योममार्गेण तत्र अवतीर्णः मातलिः तस्मै राज्ञे[3] राध्यमानः तिलोत्तमाशापस्य यथाश्रुतं चतुर्दशवर्षावधि तत्प्रियावियोगं समभिदधौ इति स्वप्रियतमायाः पुनः सङ्गत्याशया[4] यथाकथञ्चित् राजा जीवितुम् आचकाङ्क्ष। तेन पक्षीन्द्रेण खमुन्नीतां मृगावतीं च जीवन्तीं[5] संजानानेन उदयाचले परित्यक्तां शोकभयाकुलत्वात् एकाकिनीम् अद्रितटे क्रन्दन्तीम् एकः आजगरः निगरीतुम् ऐच्छत् किन्तु शुभोदर्का सा निहताजगरेण एकेन अदृष्टनष्टेन पुंसा सुरक्षिता, तथापि च पतिविरहिता जीवनधारणाय अनिच्छन्ती एकस्य वन्यवारणस्य अग्रे आत्मानं प्रक्षिप्तवती। तेनापि च दयालुना इव परिरक्षिता, गिरिप्रपतनकृतमरणमनाः गर्भभरालसगमना सा भर्त्तारमनुस्मरन्ती मुक्तकण्ठं रुरोद। तस्याः क्रन्दनमाकर्ण्य तत्र समागतेन एकेन फलमूलार्थिना मुनिपुत्रेण यथावृत्तं श्रुत्वा भृशम् आश्वासिता स्वेन[6] साकं कथञ्चित् जामदग्न्याश्रमं च नीता। सा तत्र दुःखिजनाश्वासावतारम् इव स्वतपस्तेजसा[7] उद्यदर्कमिव जमदग्निम् अक्षिलक्ष्यीचकार। आश्रितवत्सलो मुनिः प्रणिधानेन[8] सर्वमाकलय्य वियोगविक्लवां मृगावतीम् अभाषत—'पुत्रि शुचा[9] अलम्; अत्र पितृवंशधरः ते पुत्रो जनिता भविता च भर्तृसंगम इति भर्तृपुत्रप्राप्त्या[10] विस्रब्धम् इह निवसनीयम्'।

11. तेन मुनिना इत्थम् उक्ता अमुक्तात्मभर्तृसङ्गमाशा सा तस्मिन्नाश्रमे आश्रयं जग्राह असूत च तत्र कतिपयैरेव दिवसैः[11] सुतम्, यस्य च प्रसवसमये

---

१. 'कर्तृकरणयोस्तृतीया'। २. 'येनाङ्गविकारः'। ३. 'राधीक्ष्ययोर्यस्य विप्रश्नः'। ४. 'हेतौ'। ५. 'संज्ञोऽन्यतरस्यां कर्मणि'। ६. 'सहयुक्तेऽप्रधाने'। ७. 'इत्थंभूतलक्षणे'। ८. 'हेतौ'। ९. 'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका'। १०. अत्र निवासे भर्तृपुत्रयोः प्राप्तिः फलमिति फलस्यापि हेतुत्वात् 'अध्ययनेन वसति' इतिवत् 'हेतौ' तृतीया। ११. 'अपवर्गे तृतीया'।

इत्थम् आकाशवाणी अभूत् यत् 'अयम् उदयनो नाम्ना महानुभावप्रभावः शिशुः सञ्जातः अस्य च सूनुः सर्वविद्याधराधिपो भविष्यति' । एवं क्रमात् तस्मिन् एव आश्रमे स्ववयस्यैः सह वर्धमानः स बालः क्षत्रियोचितैः अखिलैः संस्कारैः संस्कृत्य धनुर्वेदादिभिः सर्वाभिः विद्याभिश्च जमदग्निना व्यनीयत । मृगावती च सुतस्नेहात् सहस्रानीकनामाङ्कितं कटकं स्वकराद् आकृष्य तस्य हस्ते परिधापितवती ।

12. एकदा आखेटके उदयनः अटव्यां शबरगृहीतमेकं सुन्दरं सर्पमालोक्य तस्मिन् दयालुः तन्मुक्त्यर्थं शबरमभिहितवान् । किन्तु सोऽब्रवीत्—'प्रभो, एष सर्पो मदीया जीविका । विपन्नपूर्वपन्नगेन मया मन्त्रौषधिबलात् अवष्टब्धः अयम् अटव्याम् उपलब्धः । इमं खेलायन् एव अहं निजजीविकां निर्वक्ष्यामि । एतदाकर्ण्य उदयनः जननीबद्धं निजकरकटकं तस्मै शबराय[1] दत्त्वा तं पन्नगम् अमोचयत् ।

13. गृहीतकटके च शबरे गते, अतिप्रीतः पन्नगः उदयनम् उवाच—'महात्मन् अहं वासुकेः ज्येष्ठो भ्राता वसुनेमिर्नाम । त्वम् इमां मत्संरक्षितां घोषवतीनाम्नीं वीणां गृहाण । एवं तेन उक्तः आत्तवीणः अतिप्रीणः उदयनः स्वमातरमागात् ।

14. इतः शबरश्च उदयनप्रदत्तं राजनामाङ्कितं कटकं विपणौ विक्रीणानः तस्मै[2] क्रुध्यद्भिः राजपुरुषैः निगृह्य राजसभाम् आनीतः, 'त्वया कुतः एष कटकः समुपलब्धः' एवं राज्ञा सहस्रानीकेन सदुःखं पृष्टः सविस्तरं तदागमप्रकारं वर्णयामास । तदानीमेव 'राजन्, अधुना स ते शापः क्षीणः, जमदग्न्याश्रमे त्वदीया जाया मृगावती इदानीं पुत्रवती वर्तते' इति दिव्यया वाण्या नभो व्यजृम्भत । अतः समुपलब्धप्रियजायाजातोदन्तः अनुभूयमानातिमुत्कः प्रियतमावाप्तिसमुत्कः सहस्रानीकः तमेव शबरं पुरस्कृत्य संगतकादिभिः कतिपयसेवकैः सह उदयाचलमनुप्रतस्थे ।

15. समतिक्रान्तदवीयोऽध्वा अनुभूयमानातिश्रान्तिश्च भूपतिः मध्ये मध्ये

---

१. 'चतुर्थी सम्प्रदाने' । २. 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' ।

संगतकाभिधेन कथकेन उक्ताभिः मनोरमकथाभिः मनो विनोदयन् कौशाम्ब्याः[1] योजनानि वर्तमानं जमदग्नेराश्रमं कतिपयैरेव प्रयाणकैः अवाप। तत्र तं मुनिं शिरसा प्रणत्य स्वीकृततत्कृतातिथ्यः आसने समुपाविशत्। मुनिरपि च तस्मै नृपतये सतनयां तत्पत्नीं मृगावतीं समर्पयामास इति शापावग्रहविदीर्णोभय-हृदयस्थलं संयोगानन्दामृतधारासारेण पङ्किलत्वम् आपेदे।

16. अन्येद्युः मुनिप्रदर्शितोपकृतिद्रवीभूतहृदयः तस्मै[2] बहुशः श्लाघमानः राजा सहस्रानीको जमदग्निमामन्त्र्य सजायाजातः तस्माद् आश्रमात् प्रस्थितः क्रमात् कौशाम्बीमवाप। तत्र च स्वमन्त्रिपुत्रवसन्तकरुमण्वद्यौगन्धरायण-सहायके स्वकीययवीयःसूनौ उदयने न्यस्तसमस्तराज्यभारः वर्षीयःसचिव-प्रियतमासहायः महाप्रस्थानाय हिमगिरिमशिश्रियत्।

*वासवदत्तया सह विवाहः*

17. इत्थम् अवाप्तवत्सराज्योदयनो यौगन्धरायणादिविश्वस्तसमस्त-मन्त्रिवर्गविन्यस्तराज्यभारो मृगयायाम् विशेषेण हस्तिबन्धने वसुनेमिप्रदत्तघोष-वतीवीणावादने वा समयम् अतिवाहयन् न मेऽद्यापि कुलानुरूपा भार्या, एका वासवदत्ताख्या चण्डमहासेनसुता उज्जयिन्यां वर्तते कथं सा प्राप्तव्या इति चिन्तातुरोऽभवत्। तत्र चण्डमहासेनश्चापि मद्दुहितुरनुरूपः क्वापि कोऽपि भर्ता अत्र भुवि न अवलोक्यते, एक एव अस्ति उदयननामकः, स च मे विपक्षः इति कथं स मे वश्यो जामाता च भवेत् इति स्वाभीष्टसिद्धये[3] विचारपरायणो-ऽतिष्ठत्। एकदा च स चण्डीमन्दिराय[4] गतः तत्र च समभ्यर्चितचण्डीकः 'राजन् एतत् तव वाञ्छितम् अचिरेणैव पूर्त्यै[5] सम्पत्स्यते, हितं स्वस्ति च तुभ्यं[6] भविष्यति' इत्यशरीरिणीं वाचम् अश्रौषीत्। एतेन सुसन्तुष्टो नृपतिः निजसद-नमासाद्य मन्त्रिणः बुद्धदत्तस्य परामृष्टिम् अनुसृत्य पूर्वं साम्नैव कार्यसाफल्याय[7]

---

१. 'यतश्चाध्वकालनिर्माणं तत्र पञ्चमी' 'तद्युक्तादध्वनः प्रथमासप्तम्यौ'।
२. 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः', मुनिं स्तुवन्नित्यर्थः। ३. 'तादर्थ्ये चतुर्थी वाच्या'। ४. 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि'।
५. 'क्लृपि सम्पद्यमाने च'। ६. 'हितयोगे च', 'नमःस्वस्ति०'।
७. 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (कार्यसाफल्यं कर्तुं)।

अनल्पचतुरिमजल्पाकम् एकं दूतम् उदयनं प्रति प्रेषयन् इत्थम् आदिदेश— 'दूत, मद्वचनात् उदयनो वाच्यः यत् मदीया पुत्री गन्धर्वविद्यायां तव शिष्या भवितुम् इच्छति, अतः अस्मासु तव स्नेहश्चेत् अस्मत्सदनम् आसाद्य इहैव सा शिक्षेलिप्सा' इति। प्रैष्यश्च स्वकर्णदेशाध्वनीनीकृततन्निदेशः कौशाम्बीम् अनुप्राप्य सर्वं तत्सन्देशम् उदयनम् अकथयत्। वत्सराजश्च अशिष्टजनोचितं तद्वचः श्रुत्वा अनुभूतावमाननः आरक्तीभूताननः मन्युना 'त्वत्पुत्री गन्धर्वविद्याधिगमाय[1] मच्छिष्यताम् अभिलषति चेत् इहैव सा प्रेषयितव्या' इति प्रतिसमादिशन् महाबलशालिनमपि चण्डमहासेनम् तृणाय[2] मन्यमानः तम् अभिषेणयितुम्, निगृह्य कौशाम्बीं च आनेतुं, यौगन्धरायणेन समं सममन्त्रयत्। परं तच्छुभेच्छुना तदभिषिषेणयिषानिषिषेधयिषुणा च तेनेत्थम् अवाचि यत् 'महाराज, नैतत्साम्प्रतम्; महाप्रभावो हि चण्डमहासेनः। तद्विषयकं मया किंचित् वर्ण्यमानं भवता श्रुतिपथम् अवतार्यताम्'—

18. 'अस्ति सुधाधवलितप्रासादा, प्रस्फुरद्भास्वरपताकाभिः उपहसन्ती इव अमरावतीम्, उज्जयिनी नाम नगरी। तत्र शास्त्ययं राजा महासेनो राजसेनिः। स च अयम् एकदा 'न मेऽनुरूपः खड्गो नापि च कुलोद्भवा भार्या' इति चिन्ताकुलः चण्डिकामन्दिरम् आगत्य निराहारः चिरं चण्डिकाम् आराधयन् उत्कृत्य उत्कृत्य स्वक्रव्येण[3] हव्यवाहनम् अयष्ट। तेन अतिप्रीता भक्ताय[4] भक्तिं धारयन्ती भगवती कात्यायनी एकं खड्गम् अस्मै[5] ददती समुवाच — पुत्र अतिप्रसन्ना अस्मि ते। गृहाण इमम् असिम्। अस्य असेः साहाय्येन त्वं परापराजेयः। किञ्च अचिरादेव त्वं त्रैलोक्यसुन्दरीम् अङ्गारकासुरसुताम् अङ्गारवतीं भार्यारूपेण अवाप्स्यसि। यतो हि त्वया निजक्रव्यहवनरूपम् अतिचण्डं कर्म कृतम् अतः अद्य प्रभृति 'चण्डमहासेन' इत्याख्याञ्च त्वं यास्यसीति'। एवमुक्त्वा प्रदत्तखड्गा देवी अतिरस्यत्। राजा च मन्दिरात्[6] प्रचलितः निजप्रासादमासाद्य तत्खड्गप्रभावेण ऐरावतकल्प-

---

१. 'तुमर्थाच्च भाववचनात्'। २. 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु'।
३. 'यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञेति वाच्यम्'।
४. 'धारेरुत्तमर्णः'। ५. 'चतुर्थी सम्प्रदाने'। ६. 'अपादाने पञ्चमी'।

स्वकीयनडागिरिनामकगजसाहाय्येन च सुखं निवसन् विद्वद्भ्यो[1] विविध-शास्त्रोपदेशान् आददानोऽवर्तत ।

19 एकदा स मृगयायै वनं गतः दिवा अकाण्डपिण्डितं नैशं तम इव एकं घोरघोणिनम् अपश्यत् । प्रखरतरशरैः लक्ष्यीकृतः अपि शूकरः अनवाप्तेर्मः पलायमानः एकं बिलं प्राविशत् । समुत्सृष्टस्यन्दनः राजसेन-नन्दनः अपि गृहीतशरासनः शूकरम् अनुसरन् बिलान्तरं प्रविश्य तत्र नगर-वरम् एकम् अपश्यत्, तदन्तर्दीर्घिकातटे सविस्मयं निषीदँश्च अतिसुन्दरीम् एकां कन्याम् समवालोकत । सा च राजानम् अवलोक्य प्रेमरसासारवर्षिणा चक्षुषा तं स्नपयन्ती इव तदन्तिकम् आगत्य 'कस्त्वम्, कस्मात् कुत आयातः' इत्यादिप्रश्नानन्तरं समवाप्तयथोचितोत्तरा विमुक्तधैर्यं रोदितुमारभत । रोदनहेतुम् अनुयुक्ता च सा अब्रवीत्—'योऽयं वराहः अत्र प्रविष्टः सः अङ्गारकनामको दैत्यः । अनु एनम्[2] अन्ये बलशालिनः इति कस्मा[3]च्चिदपि भयं न बिभेति । अहं च अस्मात्[4] जाता अङ्गारवतीनामा कन्या । अयं हि शाप-दोषात् राक्षसीभूतो वज्रमयदेहो महासुरः तृष्णाश्रमार्त्त इति इह प्राप्तमपि भवन्तं परित्यज्य त्यक्तवराहरूपः क्षणं शय्यायां[5] विश्राम्यति, सुप्तोत्थिते चास्मिन् न ते श्रेय इत्यनुचिन्तयन्त्या मे अन्तःसन्तापक्वथिताः प्राणाः बाष्प-बिन्दुरूपेण गलन्ति' । श्रुतैतदङ्गारवतीवचनो राजा 'स्नेहस्ते मयि चेत् प्रबुद्धस्य अस्य अग्रे त्वं रुदिहि, रोदनहेतुम् अनुयुञ्जानं च तं केनापि त्वयि व्यापादिते का मे गतिर्भवेत्, इति तं वद' इति उवाच । सा आसुरायणी चापि प्रबुद्धे पितरि यथानिर्दिष्टम् निगदन्ती पित्रा प्रत्युदतारि—'पुत्रि मामिके मा भैषीः । मामकीनं सर्वं शरीरं दम्भोलिघटितम् । एकं च वामकरे छिद्रम् तच्चापि चापेन रक्ष्यते' । एवं स्वसुताम् आश्वासयतो निजव्यापादनभयात्[6] तां निवारयतश्च दैत्यस्य सर्वं भेदं तत्रैव तस्मान्निलीनो[7] नृपः आकर्णयामास ।

---

१. 'आख्यातोपयोगे' । २. 'हीने', कर्मप्रवचनीययुक्ते द्वितीया ( एतस्माद् हीनाः इत्यर्थः ) । ३. 'भीत्रार्थानां भयहेतुः' । ४. 'जनिकर्त्तुः प्रकृतिः' । ५. 'ल्यब्लोपे कर्मण्यधिकरणे च' ( शय्यायाम् उपविश्येति भावः ) । ६. 'वारणार्थानामीप्सितः' । ७. 'अन्तर्धौ येनादर्शनमिच्छति' ।

—२—

20. क्षणानन्तरं च स दैत्य उत्थाय स्नातः कृतमौनो विविधैः द्रव्यैः भगवन्तं भवं यष्टुं प्रवृत्ते। एतस्मिन् एव अन्तरे आकृष्टशरासनेन नृपेण तत्र उपेत्य रणाय आहूयमानः स समुत्क्षिप्तवामहस्तः तं क्षणं प्रतीक्षितुम् असंकेतत् इति समवाप्तधनुर्विद्याविशारदिम्ना राज्ञा तस्मिन्नेव मर्मस्थले एकेन पृषत्केन हतः घोरं रावं कुर्वन् निरसुः असौ अवन्यां न्यपप्तत्। राजा चापि अङ्गारवत्या साकम् उज्जयिनीमागत्य परिणीतायां तस्यां पालक-गोपालकनामानौ द्वौ पुत्रौ उत्पादयामास। ततः तेन तुष्टः तुराषाट् स्वप्ने तम् अवोचत् यत् मत्प्रसादात् त्वम् अनन्यसदृशीम् सुतां एकां समवाप्स्यसीति। कालेन उत्पन्नायां तस्याम्, व्योमवाणी तस्याः[१] प्रभविष्यन्तं सुतं रतिपत्य-वतारं विद्याधराधिपमाशु चासुसूचत्। एतेनातितुष्टो राजा स्वप्ने वासवेन दत्ततया स्वप्नवासवदत्ता इति तत्तनयानाम चकार। रतेः[२] प्रति सा चाद्य तस्य गृहे मन्थनात्[३] प्राग् रत्नाकरे वर्तमाना कमला इव विष्णवे प्रदानीयाय तिष्ठति।

21. एवंविधातुलितप्रभावः चण्डसेनः न सारल्येन परि[४] अलौकिक-शक्तेः[५] जय्यः किन्तु स विवाहे तां तुभ्यं दित्सति, निजकौलीन्यस्य गौरवाद्[६] बद्धः अमूल्यकन्यारत्नेन त्वां लोभयितुं तच्छिक्षणव्याजेन च तत्र त्वाम् आकार-यति' इति।

22. इत्थमाकर्णितवासवदत्तोदयनोदयनः स्तोकात्[७] तदाहृतहृदयोऽपि निजकौलीनपथात् न कथमपि प्रन्यचलत्।

23. इतः चण्डमहासेनोऽपि दूतमुखात् वत्सेशस्य प्रतिवाचिकम् आकर्ण्य कन्याप्रेषणे स्वलाघवम्, ऋते[८] वत्सेशाच्च स्वकीयकन्याविषयाभिलाषापूरका-नुकूलवरान्तरम् अपश्यन्, उदयनम् प्राध्वंकृत्य तत्रानयनमेव च कार्मणम्

---

१. 'भुवः प्रभवः'। २. 'प्रतिः प्रतिनिधिप्रतिदानयोः', 'प्रतिनिधिप्रतिदाने च यस्मात्'। ३. 'अन्यारादितरर्त्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते'। ४-५. 'अपपरी वर्जने', 'पञ्चम्यपाङ् परिभिः'। ६. 'विभाषा गुणेऽस्त्रियाम्'। ७. 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य'। ८. 'अन्यारा-दितरर्ते॰'।

आकलयन् विहितस्वमन्त्रिपरामर्शः निजहस्तिनडागिरिसदृशम् दारुयंत्रमयम् एकं महान्तं करिणं कारयित्वा विन्ध्याटव्यां तम् अतिष्ठिपत्। अन्तःप्रच्छन्न-सैन्यं विन्ध्याटव्यां च दारुमययंत्रबलेन इतस्ततः सञ्चरन्तं गजम् आलोक्य तद्वन्धनरसासक्तोदयनोपजीविनः सत्वरम् आगत्य 'देव, विन्ध्यवनाद्[1] आराद् भ्रमद्भिः अस्माभिः एको जङ्गमोऽचल इव मितङ्गमोऽपूर्वः समवलोकितः' इति व्याजहुः। समाकर्णितचारुचारचर्चो विचारदृगपि तदानीम् अविचारदृगिव देवो वत्सराजः सुवर्णलक्षेण तान् चारान् सन्तोष्य 'नडागिरि-प्रतिमल्लं तं लभेय चेत् चण्डमहासेनो ध्रुवम् अस्मद्वशंवदतां स्वीकुर्यात्' इति तद-वाप्तिचिन्तापर एव तां निशाम् अनैषीत्। प्रातश्च गजलिप्सया अनालोडित-मन्त्रिगालोडितः ससैन्यः पुरस्कृततत्पथकचारः नगराद्[2] बहिर्निर्गत्य आगत्य च विन्ध्याटवीम् इभक्षोभाशङ्कया दूरापसारितसकलसैनिकः घोषवतीं वीणां दधत् चारमात्रसहायः तदनुगमनपरिश्रमाद्[3] अपराजयमानः विविधानोकह-लतागुल्मादिविस्तीर्णाम् अरण्यानीं प्रविवेश। तत्र उपवीणयन् एकाकी तद्गज-बन्धनविचाराशान्तस्वान्तः सन्ध्याध्वान्तवशात् अपरिलक्षितमायागजः गीत-रसाभिभूतेन उत्कीर्णतालेन उपेत्योपेत्य विचलता च कृत्रिमगजेन तत्सहायैः[4] पृथक् कृत्वा चण्डमहासेनसाम्राज्यसीमायाः[5] सुदूरम् आकृष्टः। अकस्मात् तत्र यन्त्रमयाद् गजात् निःसृत्य सन्नद्धैः पुरुषैः परिवारितः सन् आकृष्टासिः अग्रस्थान् असयन् अपि पश्चाद् आगत्य अन्यैः सैन्यैः निगृहीतः चण्डसेनस्य निकटम्[6] आनीयत। चण्डमहासेनोऽपि च अवगतैतदुदन्तः निजयुक्तेः सुहितः सतां[7] गतम् अनुसरन् अच्छगत्य अच्छोद्य च विनम्रवचनम्, कृतवत्सराजाद-रादरः तेनैव सार्द्धम् उज्जयिनीं प्राविशत्।

24. इतः कौशाम्ब्यां तदार्जवाद्[8] बद्धाः पौरा लक्षाद्[9] बद्धम् वत्सेशमा-कर्ण्य प्राणपणेनापि तन्मोचनकृतनिश्चयाः समवेत्य राजद्वारमागत्य केन[10] हेतुना वत्सेशो निगृहीत इति कोलाहलं कुर्वाणा नितराम् अक्षुभ्यन्। किन्तु चण्ड-

---

१-२. 'अन्यारादितरर्ते०'। ३. 'पराजेरसोढः'। ४. 'पृथग्विनानाना-भिस्तृतीयाऽन्यतरस्याम्'। ५-६. 'दूरान्तिकार्थेभ्यो द्वितीया च'। ७. षष्ठी शेषे'। ८. 'विभाषा गुणेऽस्त्रियाम्'। ९. 'अकर्तर्यृणे पञ्चमी'। १०. 'सर्वनाम्नस्तृतीया'।

महासेनो 'न मया वत्सेशो हन्तव्यः अपि तु सन्धातव्यः' इति तान् समाश्वास्य तत्क्षणमेव स्वसुतां वासवदत्तां तस्मै गान्धर्वशिक्षायाः[1] हेतोः समार्पयत्, उवाच च वत्सेशम्, 'शिक्षयमाणो गन्धर्वविद्याम् त्वम् एनकाम् मे न कां भूतिं समवाप्स्यसीति मा वृथा विषादं कृथाः'। उदयनः अपि च तदेव तत्कालोचितं मन्यमानः शिष्यत्वेन वासवदत्तां स्वीकृत्य तां तद्गतेक्षणो गापयन् स्वसमयं यापयन्, तदवलोकनोपजातस्नेहः विस्मृतचण्डसेनकृतमन्युजन्यमन्युः उत्तरेण[2] प्रासादम्, तस्य[3] निकटम् एव निर्मापितगान्धर्वशालम् अध्युवास। वासवदत्ता अपि च तत्परिचर्यापरायणा अभ्यस्यमानकलाकलनात्[4] न विरमन्ती दिनेदिने च तस्य उपस्कुर्वती[5] गन्धर्वविद्यायाः[6] ज्ञानस्य[7] ईशाना विस्मृतान्यव्यापारा वीणा-वादनकलाया[8] विशेषेण नाथते स्म।

25 इतो वत्सराजानुचरेषु परावृत्य कौशाम्बीम् आयातेषु सर्वं तदनुरागपरायणं तद्राष्ट्रं स्वप्रभुं बद्धं बुद्ध्वा अतिक्रुद्धं सत् चण्डमहासेनस्य[9] उज्जयिन्याम् उज्जासनं वत्सेशस्य उज्जसनं चैव स्वप्राणानां[10] सत्पणनम् आकलयति स्म। किन्तु 'मा अमूल्यानां प्राणानाम्[11] दीव्यत, मा च स्वतनूनां मांसि असृञ्जि च छागस्य वपायाः मेदसो[12] यथा चश्चच्चन्द्रहासाहवाहावाय प्रेष्यत' इति बहुकृत्वः तस्य क्षणस्य[13] भ्रुवाणेन रुमण्वता सर्वे तद्राष्ट्रियाः क्षोभात्[14] न्यवार्यन्त। धीरो यौगन्धरायणश्च राष्ट्रम् एवम् अनुरक्तम् अवलोक्य, 'भवतां[15] स्थितिः इहैव भवतु, यूयं हि राष्ट्रस्य[16] रक्षितारः। वसन्तकद्वितीयः

---

१. 'षष्ठी हेतुप्रयोगे'। २. 'एनपा द्वितीया'। ३. 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्'। ४. 'जुगुप्साविरामप्रमादार्थानाम् उपसंख्यानम्'। ५. 'कृञः प्रतियत्ने'। ६. 'ज्ञोऽविदर्थस्य करणे'। ७. 'अधीगर्थदयेषां कर्मणि'। ८. 'आशिषि नाथः'। ९. 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' (जसु हिंसायां चुरादिः, जसु मोक्षणे दिवादिश्चेत्युभयोरत्र क्रमशः प्रयोगः)। १०. 'व्यवहृपणोः समर्थयोः'। ११. 'दिवस्तदर्थस्य'। १२. 'प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने' (अत्र वपामेदसोर्हविर्विशेषवाचकत्वेन षष्ठी, मांसासृक्शब्दयोश्च तथात्वाभावात् द्वितीया)। १३. 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे'। १४. 'वारणार्थानामीप्सितः'। १५-१६. 'कर्तृकर्मणोः कृति'।

अहं स्वया प्रज्ञया वत्सेशं मोचयित्वा निःसंशयं तस्य कौशाम्बीम्[1] आनेता। नास्त्याश्चर्यो वत्सेशस्य[2] निर्मोको मयका। कस्यचित् प्राकारस्य[3] निगडस्य[3] वा बिभित्सायां संजातायां तदानीमेव मे तस्य[4] भेदिका अवलोक्यते। विचित्रा तु मे दर्शनस्य[5] शक्तिः' इति ब्रुवाणः रुमण्वतो[6] मतो बुद्धः पूजितश्च वसन्तकेन सह कौशाम्ब्याः निर्गत्य स्वप्रज्ञामिव सत्त्वाढ्याम्, स्वनीतिमिव दुर्गमाम् विन्ध्याटवीं प्रविवेश। तत्र च अधोऽधो लतागहनवनवृक्षान्[7] गच्छन् इतस्ततः दृष्टिं च प्रक्षिपन् सहयायिनं वसन्तकं विविधारण्यरूपादिविषये इदं वातप्रम्याम[8] आसितम्, एतद् गवयानां शयितम्, तच्च गवां गतमेवं निर्दिशन् विन्ध्यैकदेशवासिनो वत्सेशस्य सुहृदः किन्तु तदानीं तद्गतिम् अविदुषः पुलिन्दाख्यस्य पुलिन्दाधिपतेः गृहम् आगतः, सर्वञ्च तमभिधाय तेनैव च पथा समागमिष्यन्तं वत्सेशं रिरक्षिषुः तत्र बहून् सज्जान् अरीन्[9] घातुकान् नियुज्य स्वयम् उज्जयिन्याः महाकालश्मशानं प्राप्तवान्। तत्र च वत्सेशं[10] द्विषतः तदपहारकस्य[11] च जिष्णोः अस्य दर्शनात् प्रीतो योगेश्वराख्यो ब्रह्मराक्षसः समासादितवान्. उवाच च एनम् यत् उज्जयिनीं[12] गामिनः तव[13] नूनं रूपपरिवृत्तिर्विधेया। अतः तदुपदेशेन यौगन्धरायणः सद्यः एव परिवर्तितस्वरूपः कुब्जः, खलतिः, पलितः, चुल्लः, अवटीटश्च एवम् अतिहासलञ्जननः संवृत्तः। तथैव च युक्त्या तेन वसन्तकोऽपि सिरावनद्धपृथूदरः, तुन्दिभः, दन्तुरः, प्रज्ञुः, विग्रश्च विहितः।

26. एवं रूपपरिवर्तनपूर्वकम् उज्जयिनीं प्रविश्य आदौ यौगन्धरायणः वसन्तकमेव राजकुलद्वारम् प्रैषयत्। स्वयं च विक्षिप्तेन[14] सदृशः स्वानुरूपं

---

१. गुणकर्मणि वेष्यते। २. उभयप्राप्तौ कर्मणि' ('कर्मणि च' इति समासनिषेधः)। ३-४. स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः'। ५. 'शेषे विभाषा'। ६. 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्ते 'क्तस्य च वर्तमाने' इति षष्ठी। ७. अधः योगे द्वितीया। ८. 'अधिकरणवाचिनश्च'। ९. 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधः। १०. 'द्विषः शतुर्वा'। ११. 'षष्ठी शेषे'। १२. 'अकेनोर्भविष्यदाधमर्ण्ययोः'। १३. 'कृत्यानां। कर्तरि वा'। १४. 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्'।

गायन् नृत्यन् इतस्ततो भ्राम्यन् प्रयोजनं मे[1] सिध्यात्, शं सुखं च वत्सेशस्य[2] भूयात् इत्येवं ध्यायन् कौतुकावलोकनपटुभिः बटुभिः परिवृतः राजगृहमाययौ। तत्र राजावरोधानां कृतकौतुकः कर्णाकर्णि वासवदत्तया स्वश्रवसोः अतिथित्वं नीतः चेटिकां प्रेष्य सत्वरं सङ्गीतशाले समाहूतः। प्रविष्टश्च तत्र गृहीतौ छद्मवेशे[3], कार्यसाधने[4] साधुः, सः बद्धं वत्सराजमवलोक्य विगलद्बाष्पः सङ्केतेनैव तस्मै स्वपरिचयं ददानः निजयोगबलात् राज्ञैव केवलेन दृश्यमानः सान्तःपुरपरिजनवासवदत्ताचक्षुरलक्षितः 'क्व अमुकः अकस्मात् अस्माद् उन्मत्तो गतः' इति वदन्तीः अवरोधवनिताः विस्मयोदन्वति[5] न्यमज्जयत्। उदयनश्च कौतुकमेतदवलोक्य सर्वमेतद्यौगन्धरायणयोगबलकृतमेव इत्यवधार्य वासवदत्तां सवयस्यां सरस्वतीवरिवस्यां कर्तुं विससर्ज। इत्थम् अवाप्तावसरो यौगन्धरायणो वत्सेश्वराय निगडभञ्जनयोगान् वीणातन्त्रीनियोजितान् वासवदत्तावशीकरणयोगाँश्च समर्पयन् द्वारि स्थितं परिवर्तितवेषं वसन्तकं स्वस्य अन्तिके स्थापयितुं च विज्ञाप्य, 'इदानीं तिष्ठ, विस्रम्भमायातायां च वासवदत्तायां यदहं वक्ष्यामि तत्त्वया कर्तव्यम्' एवमुक्त्वा सत्यपि[6] वत्सेशविप्रयोगनिबन्धनदुःखबन्धने मंक्षु तस्मात् निर्ययौ।

27. स्वल्पकालानन्तरम् अवसायितसपर्या वासवदत्ता सङ्गीतशालामनुप्राविशत्। तांश्च वत्सेशोऽवदत् यत् बहिः द्वारि एको विप्रस्तिष्ठति। सः अस्मिन् सरस्वतीपूजने दक्षिणार्थं प्रवेश्यताम्। एतदाकर्ण्य तया धृतविरूपाकृतिः वसन्तकः तत्र आनाय्यत। स च वत्सेशम् आलोक्य शुचा नात्मनीश्वरः[7] रोदितुमारेभे इति रहस्यरक्षणार्थम् उदयनः तमुवाच, 'ब्रह्मन् मा रोदीः, त्वम् इहैव आयुक्तो मत्सेवायां[8] ममान्तिके तिष्ठ। त्वं हि नृणां[9] श्रेष्ठो ब्राह्मणः, अहं च तव सर्वं वैरूप्यं निवारयिष्यामि' इति। सोऽपि च 'देव,

---

१-२. चतुर्थी चाशिष्यायुष्यमद्रभद्रसुखार्थहितैः'। ३. 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्'। ४. 'साध्वसाधुप्रयोगे च'। ५. 'सप्तम्यधिकरणे च'। ६. 'यस्य च भावेन भावलक्षणम्'। ७. 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च'। ८. 'आयुक्तकुशलाभ्यां चासेवायाम्'। ९. 'यतश्च निर्धारणम्'।

महाँस्ते प्रसादो भविष्यति' इति तं प्रतिजगाद। किञ्चित्क्षणानन्तरं तथाभूतं वसन्तकमालोक्य वत्सेशः स्मेरमुखो बभूवेति परिकलितो तदूभावे वसन्तकः अद्भुतविरूपाननविकृतः मूर्तिमद्धास्यरत्वात्[1] अपि हासकतरः अधिकाधिकं हसन् वासवदत्तामपि च हासयन् अतिशयं तोषयामास। ततः तया 'विप्र कां त्वं विशेषां कृतिं जानासि' इत्यनुयुक्तः, 'देवि, अहम् अन्यां तु कामपि कृतिं न जानामि तथापि कथाप्रियः अहम् उत्तमः काथिकः' इति तामुवाच। अतः कथाश्रवणेन[2] उत्सुकतया तया तत्कथने व्यापारितः वसन्तकः विविधाभिः स्वकथाभिः यथासमयं वत्सेशं वासवदत्तां चानुरञ्जयन् तत्रैव तस्थौ।

28. अथ शनैः शनैः वत्सेशप्रसिता[3] वासवदत्ता गाढं सद्भावं बबन्धेति यौगन्धरायणस्तत्रागत्य वसन्तकसमक्षं रहसि तं व्यजिज्ञपत्—'राजन्, स्वकार्यसाधकेषु[4] पटुः अयं चण्डमहासेनः मायया बद्ध्वा त्वाम् इह आनाय्य ससम्मानं सुतां च दत्त्वा भवन्तं मुमुक्षतीति स्वयमेतां हृत्वा गच्छामः। एवं दृप्तस्य अस्य प्रतीकारं कुर्वताम् अस्माकं लाघवमपि न स्यात्। तस्य च अयमुपायः यत् अनेन वासवदत्तायै भद्रवतीनाम्नी एका करेणुका दत्ता। सा नडागिरिमतिरिच्य अन्येन दन्तिना न अनुगन्तुं शक्या सोऽपि च तामवलोक्य युद्धपराङ्मुखो जायते। मया च तस्या महामात्र आषाढकः सोत्कोचीकृत्य आनुकूलिकीकृतः इति तां करेणुकां वासवदत्तया सह आरुह्य सायुधेन त्वया नक्तम् इतः अपयातव्यम्। अहमितः मार्गरक्षार्थं तव सख्युः पुलिन्दस्य पार्श्वम् उपसर्पामि'। एवमुक्त्वा यौगन्धरायणो जगाम।

29. वत्सराजश्च यौगन्धरायणोक्तं तत्सर्वं वासवदत्तायै शशंस। तथेति प्रतिपन्नायाश्च तस्यां समुपात्तनिजवीणो वसन्तकसहितः गृहीतवासवदत्तोपनीतप्रहरणः यौगन्धरायणप्रदत्तयोगविद्यासाधनस्रंसितनिगडबन्धनः करेणुकाम् आरुह्य स्वरहस्यधारिण्या काञ्चनमालया तत्सख्या सह वासवदत्ताऽप्यारोह्य परिरक्षिताया अपि सिमस्याः[5] सीमायाः, यथास्थानं 'स्थितेषु[6] च सिमकेषु

---

१. 'पञ्चमी विभक्ते'। २-३. 'प्रसितोत्सुकाभ्यां तृतीया च'। ४. 'यतश्च निर्धारणम्' (संज्ञानिर्धारणम्)। ५-६. 'षष्ठी चानादरे'।

यामिकेषु, प्राकाररक्षकतालभट-वीरबाहु-नामकयामिकविश्वसनपूर्वकं मत्तेभमिश्र-प्राकारवर्त्मना हस्तिपकपञ्चमः रात्रौ उज्जयिनीतः निरव्राजीत्। क्षुभितेभ्यश्चतुर-रक्षिभ्यो हृतवासवदत्तं वत्सराजं पलायितम् अवगत्य चण्डमहासेनो गोपालक-नामानं निजसूनुं नडागिरम् अधिरुह्य तदैव तदनुपदिको भवितुम् आदिदेश। किन्तु किञ्चिद्दूरमनुसरन् वाणैः क्षुभ्यमानश्च गोपालकः परावर्तिष्टेति वत्सेशः विस्रब्धं पुरः अतन् त्रिषष्टियोजनेभ्यः[1] मध्याह्ने[2] अन्येद्युः विन्ध्याटवीम् अवाप। परं तत्र उपगिरम् उदन्यन्त्याः करेण्वाः अवतीर्णे एव सवासवदत्ते वत्सेशे करेहत्य पयःपानानन्तरं सा कुञ्जरी निर्जरीभूतशरीरा स्वरारुरोह। वासवदत्तया सह अथ अतिविषण्णो वत्सराजः गगनचारिण्या वाण्या अभि-हितः यद् 'राजन्, प्राग्जन्मनि मायावती नाम अहम् अवशीभूताऽपि विद्याधर-वशीभूताऽगोवशीभूता शापवशीभूता इह जनुषि वशीभूता[3]। त्वाम् अद्य एवम् उपकृत्य निजां गतिम् आपन्ना, भविष्यन्तं तव पुत्रमपि उपकरिष्यामि। इयं त्वदीया भार्या वासवदत्ता अपि न मानुषी अपि तु भूमौ अवतीर्णा देव्या'। एवम् आकर्ण्य प्रहृष्टो वत्सेशः विन्ध्यसानुसद्मं निजसुहृदं पुलिन्दकम् स्वागमनम् अधिगमयितुम् अग्रे वसन्तकं प्रेष्य दयिताद्वितीयः पादचारी यावदेव तदभि-मुखं गन्तुमना बभूव तावदेव रूक्षैः विपक्षैः पारिपन्थिकैः पूर्वपक्षैः सिद्धान्तः इव युद्धाय पर्य्यव्रियत। शरासनसहायो वत्सेशः तदानीम् साहसिकानां तेषां पञ्चोत्तरशतं वासवदत्तायाः समक्षमेव अक्षाययत्। एतस्मिन्नेव काले वसन्तक-पुरस्सरः सयौगन्धरायणः तत्सुहृत् पुलिन्दकोऽपि आयातः इति अन्यान् दस्यून् निवार्य प्रणिपातपूर्वकं सदयितं तं निजपल्लीम् अनैषीत्। एवम् उपत्यका-पद्या-क्षताङ्गुष्ठया दर्भपाटितपादया वासवदत्तया सह तत्र गत्वा निवसन्तं वत्सेशं, प्राग् एव यौगन्धरायणेन दूतं सम्प्रेष्य सूचितः सकटकः सेनापतिः रुमण्वान् समायासीत् इति तं कटकं प्रविश्य उज्जयिनीवार्ताजिज्ञासा-परो विन्ध्याटवीभुवम् अधितष्ठौ वत्साधीशः।

---

१-२. 'सप्तमीपञ्चम्यौ कारकमध्ये' ( कर्तृकर्मशक्त्योर्मध्ये इमौ देशकालौ )।

३. 'वशाशब्दस्य वन्ध्या, स्त्री, हस्तिनी, इत्येतत्त्रयोऽप्यर्थाः अत्र निहिताः। तेन अवशीभूता अवन्ध्या विद्याधरपत्नी अहम् इन्द्रियपारवश्येन शापं प्राप्ता इह जन्मनि करिणी जाता इत्यर्थः।

**30.** कतिपयदिनाभ्यन्तरे एको यौगन्धरायणसुहृत् वणिक् उज्जयिन्याः समागत्य सूचितवान् 'देव, अतिप्रीतेन चण्डमहासेनेन त्वदन्तिकं प्रतीहारः प्रेषितः, स च आगच्छन् पश्चात् तिष्ठति, अहं च देवं विज्ञापयितुम् प्रच्छन्नः समायातः'। एतदाकर्ण्य अतिहृष्टेन वत्सेशेन वासवदत्ता अपि तत्सर्वं विज्ञापितेति सा सातिशयं प्रहृष्टा निजपितृप्रेषितं प्रैष्यं च प्रतीक्षमाणा वत्सेश्वरैकतानमानसा वल्लीपल्लवतल्लजनिजवल्लभसुहृद्भिल्लपल्लीं[1] समया समयाचकार[2]।

**31.** अचिरादेव च तत्र चण्डमहासेनेन प्रेषितो दूतः समागत्य प्रणतिपूर्वकं वत्सेशम् उक्तवान्, 'देव, देवश्चण्डसेनो भावत्ककार्यम् अभिनन्दन् सम्मुखेन इत्थं सन्दिशति यद् वासवदत्ताम् एवं हरता भवता समीचीनम् आचरितम्। तदर्थमेव च त्वम् इह आनीतः आसीः। किन्तु निगृहीताय तुभ्यं प्रदत्ता वासवदत्ता अस्मान् न प्रीणीयात् इति विशङ्किभिः अस्माभिः न तथा आचरितम्। इदानीं वैवाहिकविधिसम्पादनार्थं मदीयः सुतो गोपालकः शीघ्रं समागमिष्यतीति'।

**32.** एतत्सर्वं वत्सेशम् आख्याय स दूतः वासवदत्तायै अपि तत् सर्वं निवेदितवान्। तेनः च सन्देशेन वासवदत्तया सह अत्यन्तम् आनन्दितो वत्सेशो निजराजधानीं कौशाम्बीं जिगमिषुः गोपालकागमनप्रतीक्षणार्थं चण्डमहासेनप्रेषितं प्रैष्यं निजसुहृदं पुलिन्दकं च तत्र संस्थाप्य परेद्युः प्रातरेव स्वपुरीं प्रति प्रतस्थे। पञ्चभैः एव च दिनैः मार्गोन्मुखजनाम् विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितराजपथाम् कौशाम्बीम् आगत्य सेवासमागतनृपाकीर्णं मागधोद्गीतमङ्गलं राजगृहं प्रविवेश।

**33.** अचिरादेव च वासवदत्ताभ्राता तत्रायातः सप्रतीहारपुलिन्दको गोपालकः इति सविधिविनिर्वर्तितविवाहौ वधूवरौ स्वावासवेश्म

---

१. समया शब्दयोगे 'अभितः परितः'—इत्यादिना द्वितीया।

२. समयम् अत्यवाहयत् इत्यर्थः (समयाच्च यापनायाम्)।

विवशतुः। वत्सराजविवाहोत्सवम् उपलभ्य प्रहितदूताहूताः समागताश्च प्राघुणिकाः सरुमण्वद्यौगन्धरायणसत्कृताः स्वस्वावासं गताः। रुमण्वद्यौगन्धरायणवसन्तकादयोऽपि च राजकुलपरिजनाः वस्त्राङ्गरागाभरणग्रामग्रामैः वत्सेशेन विशेषेण सम्मानिताः।

34. एवं सुसम्पन्ने शुभोद्वाहे कतिपयदिवसान् तत्र स्थित्वा वत्सेशम् आपृच्छ्य गोपालकः अपि स्वगृहाय उज्जयिनीम् अभिप्रतस्थे। अधि कौशाम्ब्यां[1] वत्सेशश्चापि रुमण्वन्तं सैनापत्ये यौगन्धरायणं च मन्त्रित्वे एवम् अन्यान् अपि च यथायथं तदुचितपदेषु[2] अधिकृत्य नवोढवासवदत्ताविलासासक्तैकमानस उवास।



१. 'अधिरीश्वरे', 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'।

२. 'विभाषा कृञि' (पा० १।४।९८)।

# समास-स्त्रीप्रत्ययनिर्देशात्मको द्वितीयो विलासः

*लावाणकगमनं*

35. एवं स्वप्रियतमया[1] वासवदत्तया सह अधिकौशाम्बि[2] प्रजाः प्रशासति वत्सेशे यद्यपि सर्वत्र सुसज्जनविद्वज्जनम्[3], दुर्जनप्रजापीडनकम्[4] अतः ब्राह्मणानामपि निर्विघ्नं वेदोपनिषच्छास्त्राद्यध्ययनम् अवलोक्यते स्म, तथापि एतावन्मात्रेणैव सन्तुष्टं विजिगीषाविरहितं तं वासवदत्ता-मद्य-मृगयासक्तमानसम् अवलोक्य एकदा तस्य मुख्यामात्यो यौगन्धरायणः सेनापतिं रुमण्वन्तम् एवमुवाच—'वत्सेशो हि पाण्डवान्वयसम्भवः, सर्वा मेदिनी एतद्वंश्यवशवर्तिनी[5]; किन्तु अविजिगीषुणा एतेन सर्वथा उदासितम् इति कौशाम्बीमतिरिच्य सर्वं राज्यम् अस्य शत्रुभिर्गृहीतम्। अतः अस्माभिः यथाशक्ति[6] स्वबुद्ध्या राजहिताय तथा प्रयतनीयं यथा यथासम्भवम् अयं परम्परीणम् अखिलं राज्यं पुनः आसादयेत्। एवं कृते एव अस्माकं मन्त्रित्वसाफल्यम् स्वामिभक्तिप्रदर्शनं च। अत्र मगधाधीश्वरः प्रद्योत एव एकः अस्माकं शत्रुः। अतो वासवदत्तां स्वबुद्ध्या प्रच्छन्नं स्थापयित्वा शर्वर्यां[7] तदावासं इन्धनौघधग्ज्वालामालावलीढं विधाय 'देवी दग्धा' इति सर्वत्र समुद्घोषणा कार्या। अन्येन औपयिकेन मगधाधिपः पद्मावतीरूपं स्वकन्यकारत्नं[8] वत्सेश्वराय न दास्यति। एतदर्थं हि पूर्वं प्रार्थितः स उक्तवान् यद् वत्सेशः वासवदत्तायां सातिशयम् आसक्तः इति चक्षुषः तारकाम्[9] इव प्रेष्ठां स्वपुत्रकां[10] तस्मै प्रदातुम् अहं न समीहे। सत्यां च वासवदत्तायाम्

---

१. 'अजाद्यतष्टाप्'। २. कौशाम्ब्याम् इति अधिकौशाम्बि, 'अव्ययं विभक्ती' त्यादिना विभक्त्यर्थे अव्ययीभावसमासः। ३-४. समृद्धिव्यृद्ध्यर्थयोः 'अव्ययं विभक्ती'तिसमासः। ५. 'ऋन्नेभ्यो ङीप्'। ६. यथार्थेऽव्ययीभावः। ७. 'वनो र च'। ८. 'क्षिपकादीनां च'। ९. 'तारका ज्योतिषि'। १०. सूतकापुत्रिकेति पक्षेऽकारः।

वत्सेशोऽपि नाम्यां परिणेष्यतीति तद्ग्धत ख्यातौ उदयनेन परिणीतायां पद्मावत्याम् सम्बन्धी मगधेश्वरः सर्वथा अस्माकं सहायको भवेत् । तत्साहाय्येन च पूर्वं प्राचीं[1] ततश्च क्रमशः अन्याः दिशाः[2] विजित्य अखिलाम् इलाम् वत्सेश्वरस्य वशताम् आनयाम । उद्योगपरेषु चास्मासु वत्सेशोऽवश्यं सार्वभौमो भवेत् इति दिव्यया वाचया[3] उच्चरितचरम् । अतः अस्मदुद्योगसाफल्यं निर्विचिकित्सम् ।

36. अपडक्षीणो अस्मिन् विमर्शे यौगन्धरायणाद् एतदाकर्ण्य पद्मावतीहेतोः करिष्यमाणे चास्मिन् साहसे सन्दिहानो रुमण्वान् उवाच— 'अभीष्टवनिताविप्रयोगो हि विवेकशालिनमपि दुःखाकरोति अतः वासवदत्तावियोगेन दुःखापन्नः[4] नृपतिः न कथमपि सुखप्राप्तश्[5]चेत् तदा अस्माकं प्रयत्नार्थः[6] निष्फलः स्यात् इति तद्दुःखदुःखिता वयमपि न कथमपि सन्तुष्टा भवेम । अतः नीतिनिपुणेनापि भवता अस्मिन् कर्मणि कथं सौवस्त्यं सम्भाव्यते'? एतदाकर्ण्य यौगन्धरायणः प्रत्युवाच यत् 'दिव्यावतारेण हरिपरिवारितेन[7] रामेणापि रावणोच्छेदार्थः[8] सीतायाः वियोगः सोढः । किञ्च देवीदाहप्रवादात् पद्मावतीविवाहं यावत् यदि धैर्येण वयं नृपतिसुखाय[9] कार्यं कुर्मः तदा न कथमपि असाफल्यभयम्,[10] वत्सेशश्चापि अस्माद् व्यसनात् स्तोकान्मुक्तो[11] भवेत्' । निश्चितमतेः यौगन्धरायणस्य एतां निश्चितिम् अवगत्य रुमण्वान् निजगाद यत् एतत् निश्चप्रचं[12] चेत् तदा वासवदत्तायाः भ्रातरं सम्मन्त्र्य एतत्सर्वं विधीयताम् । इत्थं ताभ्यां द्वाभ्यां परस्परामन्त्रणापूर्वकम् आकारितः निजचिकीर्षितं च उक्तः वासवदत्ताभ्राता गोपालकः तदानीं कर्णकटुकाम्[13] अपि शुभोदर्कां

---

१. 'उगितश्च' । २-३. भागुरिमते हलन्तात् टाप् । ४-५. 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इत्यादिना द्वितीयातत्पुरुषः । ६. 'तृतीया तत्कृतार्थेन गुणवचनेन' । ७. 'कर्तृकरणे कृता बहुलम्' । ८-९. 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' । १०. 'पञ्चमी भयेन' । ११. 'स्तोकान्तिक०' 'पञ्चम्याः स्तोकादिभ्यः' । १२. निश्चितं च प्रचितं चेति मयूरव्यंसकादिसमासः । १३. 'प्रत्ययस्थात्०' इत्यस्य प्रत्युदाहरणम् ।

तन्मन्त्रिणां स्वस्वसुः[1] सुखाय मत्वा तथा कर्तुम् अनुमेने। एवं त्रयोऽपि ते देव्या वत्सेशेन च अनुमगधं[2] लावाणकं गन्तुं तत्राखेटव्याजेन नृपतिम् असन्निधाप्य देवीं वासदत्तां पद्मावतीगृहे[3] निक्षिप्य स्वचिकीर्षितं साधयितुं च रात्रौ मन्त्रयित्वा वत्सेशम् ऊचुः—'देव, निःश्वापदीकृता[4] मृगयया इहत्यिकाः[5] सर्विकाः[6] भूमयः इति लावाणकं गतानाम् अस्माकम् अतिशयमनुरञ्जनं स्यात्। अनिर्वचनीयं हि तत्रत्यं रामणीयकम्। वर्तन्ते च तत्र सुरम्याः आखेटभूमयः शोभनाश्च शाद्वलाः प्रदेशाः। अतः विनोदानन्दानुभूतये अस्माभिः अवश्यं तत्र गमेलिमम्। एतदाकर्ण्य आखेटक्रीडैकलालसेन वत्सेशेन स्वीकृतौ दत्तायां परिकल्पिते च गमनलग्ने हरिकथापारायणप्रवीणो[7] वीणोद्भावितमधुरगगनगुणप्रसारणविशारदो नारदोऽकस्मात् इतस्ततः पर्यटन् तत्राजगाम। स च अनुसम्पादितविधिवत्सपर्याय अतिप्रह्वाय आनतपूर्वकायाय[8] नृपाय पारिजातमयीं स्रजं दत्वा विद्याधराधिपं कामदेवांशपुत्रं चिरंजीवकायै[9] शुभंयिकायै[10] आर्यिकायै[11] वासवदत्तायै च आशंसन् उवाच—'देव, युधिष्ठिरादयः ते पूर्वजाः मम सुहृदः आसन् इति तत्प्रतीत्या अहमिह समायातः। अचिरेणैव त्वं महतीं समृद्धिं लप्स्यसे किन्तु कश्चित्कालं यावत् सुखान्तं दुःखं ते भविष्यति। तथापि धीर, धैर्यावधीरणा न कर्तव्या नापि च स्वदेहस्य अमाङ्गलिकं कर्तुम् अध्यवसेलिमम्। गरिम्णि महाहिमवतो हिमवतः सदक्षस्य भवादक्षस्य महत्याम् अपि विपत्याम् अतिदार्ढ्येन भवितव्यम्'। इत्युक्त्वा भङ्गिसूचनविशारदे नारदे दिवमुद्गते सम्भावितचिकीर्षित-स्विक-[12]सिद्धयः प्रयत्नपराः यौगन्धरायणादयः निष्कौशाम्बयः[13] सन्तः पूर्वोक्तयुक्त्या

---

१. 'न षट्स्वस्रादिभ्यः'। २. सामीप्यार्थेऽव्ययीभावः। ३. 'षष्ठी'। ४. 'ऊर्यादिच्विडाचश्च'। ५. 'त्यक्त्यपोश्च'। ६. 'अव्ययसर्वनाम्नाम्०' इत्यकचि ततः 'प्रत्ययस्थात्०' इत्यादिना इत्वम्। ७. 'सप्तमी शौण्डैः'। ८. 'पूर्वापराधरोत्तरम्०' इत्यादिना एकदेशिसमासः। ९. 'आशिषि वुनश्च न'। १०. 'प्रत्ययस्थात्०' इति नित्यमित्वम्। ११. 'उदीचामातः स्थाने०' इति वैकल्पिकमित्वम्। १२. 'प्रत्ययस्थात्०' इतीत्वम्। १३. 'निरादयः क्रान्ताद्यर्थे पञ्चम्या'।

ससेनापरिच्छदं,[१] ह्रेषितहयं, करटिगमनभारविविधस्थलाधरीकृतधरम्, बहुपदाति-हस्त्यश्वरथकस्वाटाट्यासञ्चूर्णितधराधरम्, सम्मूर्च्छता च अनेकवाद्यघोषेण स्वकीयां समवाप्स्यमानां मन्त्रिचिकीर्षितसिद्धिमिव अभिव्यक्तीकुर्वन्तं सवासवदत्तं वत्सेशं लावाणकम् आनिन्युः। नातिदवीयसी च यत्रत्या अटवी स्वरूपैः आढ्यङ्करणी[२] शरणीकृतबहुहरिणी रमणीयतरुणी[३] इव तन्मनो हर्त्तुं प्रावर्तत।

37. एकस्मिन् दिने मृगयार्थं गते वत्सेशे गोपालकसमन्वितो यौगन्धरायणः रहसि वासवदत्तामुपगत्य तद्भ्रात्रा प्रबोधितचरीं ताम् अवगतकर्त्तव्याम् अकरोत् इति तस्य कार्यस्य वल्लभवियोगक्लेशदायित्वेऽपि स्वस्वामिसमुन्निनीषया सत्कुलाङ्गनानुरूपं तथा कर्त्तुं सा अन्वमन्यत। अतः महामतिः मन्त्री रूपपरिवर्तनयोगेन तां ब्राह्मणिरूपाम् वसन्तकं च वटुकरूपं काणम् आत्मानञ्च स्थविरब्राह्मणाकृतिम् विधाय मगधान् प्रति अभिप्रतस्थे।

38. इतश्च तेषु निर्गतेषु रुमण्वान् तदावासम् आशु आशुशुक्षणिना सुसन्दीप्य 'हा! हा!! वसन्तकसहिता देवी वासवदत्ता दग्धा' इत्यघोषयत्। किञ्चित्कालानन्तरं च शनैः शनैः शान्तेऽपि आशुशुक्षणौ तत्रत्यजनक्रन्दनं चिररात्राय मानवहृदयम् अतिमात्रं सन्तापयामास।

39. यौगन्धरायणस्तु वासवदत्तां पुरस्कृत्य वसन्तकेन च सह मगधाधिपपुरं प्राप्य उद्यानगतां पद्मावतीं तद्रक्षकमुखेन एतद् असूचयत् यत् 'भर्तृदारिके भवद्दिदृक्षया[४] ब्राह्मणबालिका-काणवटु-सहितः कश्चिद् ब्राह्मणः उद्यानं प्रविविक्षुः द्वारि तिष्ठति' इति। एतद् आकर्ण्य राजकन्या तं निजनिकटम् आकार्य अपृच्छत्, 'ब्राह्मण, केयं ते बाला किमर्थं च त्वम् इहागतः'? इति। यौगन्धरायणः उदतरत्, 'देवि इयम् आवन्ति-

---

१. सेनापरिच्छदेन युगपत् इति यौगपद्येऽव्ययीभावः। २-३. 'नञ् स्नञ्०' इत्यादिना ङीप्। रमणीयतरुणीत्यत्र च 'विशेषणं विशेष्येण बहुलम्' इति कर्मधारये 'पुम्वत्कर्मधारयजातीयदेशीयेषु' इति पूर्वपदस्य पुम्वद्भावः।
४. भवत्याः दिदृक्षया—'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः'।

कामिधा मम कन्या भर्त्ता चास्याः व्यसनी चिरण्टीम्[1] अपि इमां स्ववधूटीं[2] विहाय क्वापि गतः। अतः इतो गत्वा इतस्ततस्तमन्विष्य यावदिहानयामि तावदियं तव हस्ते रक्षार्थं निक्षिप्यते। अस्याः भ्राता अयं काणवटुः अपि इहैव स्थास्यति येनासौ अस्मद्वियुक्ता एकाकिनी दुःखं नानुभवेत्। अत्रभवत्या एतस्यां ममाभ्यर्थनायाम् ऊरीकृतायां[3] प्रायः अर्द्धं ममोद्देश्यम् इदानीमेव सिद्धं स्यात्। एतदाकर्ण्य तथेतिप्रतिपन्न-वचसि पद्मावत्यां लघूभूतमुहूर्ताकूतः[4] विचारश्लक्ष्णो[5] मन्त्री यथाव्यव-सितमनुष्ठातुं ततः प्रस्थाय यथाकालं लावाणकं परावर्तत।

### पद्मावत्या सह विवाहः

40. इतो वासवदत्तासम्पर्कसमकालमेव अतिप्रीता पद्मावती कृत-तत्कालोचितसत्कृत्या सकाणवटुकया वासवदत्तया सह उद्यानात् निज-भवनमागता तत्सौविध्ये सर्वथा सावधाना बभूव। तत्र स्थितायाश्च तस्याः कल्पनातीतेन सौकुमार्येण शरीरसौष्ठवसौरभादिना च आत्म-सदृशीं[6] ताम् अवलोकयन्ती अदृष्टप्रेरणया अमरपुरपतिताम् इव त्रिलोकी-विजिहीर्षया[7] यथाकामं भूमिम् अवतीर्णाम् इव हस्तस्पर्शमात्रम्लेयाम् अनुपमेयां[8] तामाकलयन्ती शिष्टविशिष्टोपचारैः अहोरात्रं[9] नैकधा[10] ताम् उपाचरत्।

41. एकदा पद्मावतीप्रसाधनप्रसङ्गे वासवदत्ताकृतौ वत्सेशशिक्षित-पूर्वौ अम्लानमालातिलकौ[11] विलोक्य पद्मावतीमाता तां पप्रच्छ, 'केन इमौ विरचितौ' इति। सा प्रोवाच 'ममावासे आवन्तिकानामधेया एका ब्राह्मणसुता, तया एव एतौ कृतौ इति'। सा च तदाकर्ण्य 'या ईदृशी सर्वगुणसम्पन्ना सा न कदापि मनुषी[12] भवितुं सम्भवति' एवं ताम्

---

१-२. 'वयस्यचरम इति वाच्यम्'। ३-४. 'ऊर्यादिच्विडाचश्च', 'कुगति-प्रादयः'। ५. 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः'। ६. कञ्-प्रत्ययान्तत्वात् 'टिड्ढाणञ्०' इत्यादिना ङीप्। ७. 'द्विगोः'। ८. 'नञ्', 'न लोपो नञः', 'तस्मान्नुडचि'। ९. 'चार्थे द्वन्द्वः' 'अहः सर्वैकदेश०'। १०. 'सुप्सुपा'। ११. 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः'। १२. 'जातेर-स्त्रीविषयादयोपधात्', 'हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः'।

उपहारे व्याहृत्य ततोऽप्यधिकसम्मानपूर्वकं तद्रक्षणम् आदिदेश । इत्थं सर्वथा स्वानुरूपं सत्कृता वासवदत्ता पद्मावतीगृहे सुरक्षिता अवर्तत ।

42. अत्रान्तरे अतिदूरभूमिषु मृगयां कृत्वा सायाह्ने[1] लावाणकमायातो वत्सराजः[2] भस्मीभूतं[3] स्वावासम् आलोक्य तत्र मन्त्रिभ्यः सवसन्तकां वासवदत्तां दग्धां चाकर्ण्य निश्चेतनो भूत्वा भूमौ पपात । ददाह च तस्य देहं दहन इव दारु, दारुणो दयितादाह[4]संवादः । क्षणादुपलब्धसंज्ञश्च, 'हा प्रिये, क्व मामशरणं त्यक्त्वा गता ? एहि ! एहि!! देहि मे प्रतिवचनम्' इत्युच्चैरुच्चरन् दिक्षु विदिक्षु च विलिखिताम् इव, चक्षुषोः उत्कीर्णाम् इव, हृदये निखाताम् इव वासवदत्ताम् आह्वयमानः मोहाविष्टचेतसा अतिकरुणं विलपन् तद्वियोगज्वालावलीढः प्राणपरित्यागप्रवणो बभूव । किन्तु तदानीमेव स्वविषये स्मृतनारदवचनः स्मृततन्निर्देशश्च तद्वियोगं शुभोदर्कं तर्कयन् गोपालकं स्वल्पशोकम् यौगन्धरायणं च अनतिदुःखितं समवलोक्य सम्भावितवासवदत्ताजीवनो महामात्य[5]नीत्या भाविनं देवीसमागमं मन्त्रिभिः बोध्यमानः प्रजापार्थिवः[6] पार्थिवचन्द्रः[7] कथञ्चित् किञ्चिद् धैर्यम् अवाप ।

43. इतो लावाणकचारेभ्यः वासवदत्तादाहविषयं मगधराजः शुश्राव इति देशकालज्ञोऽसौ स्वसुतां पद्मावतीं यौगन्धरायणादिभिः मन्त्रिभिः प्रार्थितचरीं[8] वत्सेशस्य जीवनसहचरीं[9] चिकीर्षुः स्वेप्सितं यौगन्धरायणाय सन्दिदेश । सोऽपि च तत्संदिष्टं स्वीकृत्य सङ्ख्यात[10]रात्राभ्यन्तर एव निर्धारितविवाहलग्नोऽह्नाय मगधराजाय प्रतिदूतं प्रेषयामास । दूतमुखाच्च सम्वादनकमाकर्ण्य स्वसुतास्नेहनिजविभवानुरूपसंयोजितोद्वाहसम्भारः मगधाधिपः[11] तद्देशस्थितान् सर्वान् निजसम्बन्धिनः सुहृदश्च द्रुतं[12]

---

१. अह्नः सायः (अवसानम्) इति विग्रहे—'पूर्वापराधरोत्तरम्०' इत्येकदेशिसमासः । २. 'राजाहःसखिभ्यष्टच्' । ३. गतिसमासः । ४. 'उपपदमतिङ्' । ५. 'सन्महत्०'—'आन्महतः समानाधिकरणजातीययोः' । ६. शाकपार्थिवादित्वात् समासः । ७. 'उपमानानि सामान्यवचनैः' । ८-९. 'टिड्ढेति' ङीप् । १०. 'अहः सर्वैकदेशसंख्यात'—इत्यच् । ११. 'उपपदमतिङ्' । १२. 'सामान्ये नपुंसकम्' ।

निमन्त्रयितुं सादिनः प्रैषयत् वत्सेशोऽपि च तथैवाकरोत् इति निश्चितोद्वाहदिवसे वरतः[1] कन्यातश्च एवमुभयतः समायातानां आप्तनिमन्त्रणानां[2] प्राघुणिकानां सकुथकुअरक्रमेलकाश्वीयबृंहणह्रेषणादिभिः विक्षोभितेतररथ्याः, रथ्याकीर्णरथ्याः, भेरीझर्झरमृदङ्गपणववेणुकरतालादिवाद्यव्यग्रपरिजनादिचरणशतसंक्षोभचलितक्षितितला विचित्राभिरपि सचित्राभिः पताकाभिः प्रतिभवनम् उद्भासमाना[3] समाना दिवा, दिवारात्रं सम्पाद्यमानानेकसमुत्सवा, मुत्सवामुग्धमहाजनसम्मर्दा अभूद् मगधाधिपराजधानी। अथ सुदिनाहे प्राप्ते शुभंयौ लग्ने, यथायथं स्थितेषु च शुभग्रहेषु सुतरां गायत्सु गायकेषु, नृत्यन्तीषु च पौरपुरन्ध्रीषु आमुक्तकौतुकाम् सयौतकाम् विश्राणितबहुसूत्या[4]-भोज्यभुजिष्याम् स्वविभूत्यनुरूपं महार्हालङ्कारैरलङ्कृत्य मगधेश्वरप्रदत्ताम् पद्मावतीं पाणीकृत्य अपि वत्सेशः सम्पाद्यमानतद्विवाहायाः दिव्यौ अम्लानमालातिलकौ दृष्ट्वा वासवदत्तावियुक्तोऽपि पुनस्तदुपलब्ध्याशातन्तुसमवनद्धहृदयः तत्र अलक्षितस्थितामपि स्वपूर्वप्रियतमां न कथंचिदपि हृदयादपसारयामास।

44. अथ विवाहानन्तरं मगधेश्वरेण श्राणा-संयाव-पेटक-कूर्चिका-कुण्डलिनी - फाण्टरसगोलक - त्रिकोणक - मोदकैः, यवागू - शष्कुली - कचौरीण्डरिकापूपपर्पटैः, शुक्तासुततेमनैः, रामठजीरकादिविविधाभिघार्यप्राज्याज्यसुगन्धितद्रव्याभिघारितसहरिद्रशतपुष्पैलाकुस्तुम्बुरुमरिचलवङ्ग - तुवरिका-माष-मूल्य-मुस्तक-चणक-सतीनकसूपैः, उग्रगन्धाराजकर्णिका-सोपस्करकरवेल्ल-पटोल-महाफला-समला-पालक-वास्तुक - कोशातकी - मूलिका-कर्कारु-शिम्ब-बिम्बिका-वृन्ताकप्रभृत्यनेकशाकैः, स्वादिष्टभिस्सा-करपट्टिका-दधिवटकादिविविधवर्णनातीतषड्रसव्यञ्जनैः, विविधैः आर्तवफलैः अन्यैश्चापि तत्कालोपलब्धैः अनार्तवफलैः, द्राक्षादाडिमादिरसैश्च यथाकालं

---

१. 'षष्ठ्याः व्याश्रये'। २. 'प्राप्तापन्ने च द्वितीयया'। ३. अनुबन्धस्यलाश्रयत्वात् ङीबभावः। ४. 'सूतयुवत्याम्', 'भोजक्षत्रिये' इति ष्यङि 'यङश्चाप्'।

स्वादुङ्कारं मूलकोपदंशं[1] च सुसम्पादिते अखिलाश्नीतपिवतप्रीतिभोजने[2] चतुरो यौगन्धरायणो मन्त्रभिदाभिया 'वत्सेशोऽद्यैव अस्माद् यास्यति' इति मगधेशमुक्त्वा कन्यास्नेहपाशबद्धादपि तस्मात् कथञ्चित् उदञ्चितानुमतिः सवत्सेशः पद्मावतीं वधूयानमारोह्य त्वरमाणः वध्वा सह सपरिच्छदागन्तुकराजन्यो लावाणकमुपेत्य परेद्यवि समागतप्राघुणिकान् सबहुमानं सत्कृत्य विसर्जितवान् ।

*कौशाम्बीपरावर्तनम्*

45. इतः सैन्यस्य पृष्ठतः कृतरूपविवर्तं वसन्तकं पुरस्कृत्य वासवदत्ता अपि पद्मावतीपितृगृहान्निर्गता लावाणकमागत्य सायाह्ने गोपालकगृहं प्राविक्षत् । तत्र प्रदर्शितानलपादं सोदरं निजभ्रातरं साक्षात्कृत्य कण्ठे गृहीत्वा रुदत्या बाष्पव्याकुललोचनायाश्च तस्याः वत्सेशविश्लेषदुःखं व्यपोढुमागत्य यावदेव सरुमण्वत्कः यौगन्धरायणः प्रयतते तावदेव पद्मावतीसकाशं प्राप्ताः महत्तरास्तामूचुः—'देवि, अस्मासु इह समायातेषु राजभवनमपहाय इह समायाता आवन्तिका राजपुत्रस्य गोपालकस्य गृहे वर्तते' । एतदाकार्ण्य किञ्चित् साशङ्का पद्मावती तान् तत्र प्रहिण्वती वत्सेशस्याग्रे एवं सन्दिष्टवती—'आवन्तिके, त्वं हि मयि निक्षेपः इति नापरत्र कुत्रापि स्थातुं ते प्रयोजनम्; अतो यत्र अहमस्मि तत्रैव त्वया आगन्तव्यम् ।'

46. एतदाकर्ण्य प्रयातेषु तेषु, 'केन इमौ मालातिलकौ कृतौ' इति जिज्ञासापरं रहसि राजानं पद्मावती प्रत्युवाच—'मद्गेहे एकेन विप्रेण न्यस्ता या एषा आवन्तिकाऽभिधा तस्याः एव प्रथमशिल्पमेतत्' । वत्सेशः तत् समाकर्ण्य नूनं सा वासवदत्तैव स्यात् इति चिन्तयन् महत्तरसनाथितद्वारम्, अन्तःस्थदेवी-गोपालकमन्त्रिद्वयवसन्तकं गोपालकगृहं प्रविश्य निजविश्लेषपाण्डुरगात्रीं[3] क्षामक्षामां चान्द्रमसमूर्तिमिव वासवदत्तां ददर्श । पारस्परिकसाक्षात्कृतिसमनन्तरमेव च शोकविकलेन्द्रियौ उभौ

---

१. 'तृतीयाप्रभृतीन्यन्यतरस्याम्' । २. अश्नीतं च पिवतं च यस्मिन् भोजने 'आख्यातमाख्यातेन क्रियासातत्ये' इति समासः । ३. खरुसंयोगोपधान्न', 'नगपांशुपाण्डुभ्यश्च', 'अंगगात्रकण्ठेभ्यो वक्तव्यम्' ।

शोकदीनौ चिरं रुरुदतुः। दम्पत्योश्च तथाभूतामवस्थामवलोक्य यौगन्धरायणोऽपि वाष्पाकुलितनेत्रः अवरुद्धकण्ठश्च संजात इतीत्थं सर्वतः कोलाहले प्रवृत्ते अतिव्याकुला पद्मावती अपि तत्रैवाजगाम। इमं सर्वं व्यतिकरं समाकर्ण्य तुल्यावस्थायाः पद्मावत्याः प्रत्यक्षं[1] भृशम् आक्रोशन्ती वासवदत्ता भर्तृदुःखदायिन्याः मे जीवितेन किं प्रयोजनम् इत्यात्मानं न्यक्कुर्वती सातिशयमन्तस्तापमाप।

47. एवमात्मनिन्दापरवशां वासवदत्तामालोक्य 'मगधेशसुतालाभेन तव साम्राज्यलाभः' इत्यभिकाङ्क्षिणा मया सर्वमेतत्कृतमिति सर्वथा अहमेवात्र अपराध्यामि न देवीति वत्सेशं विश्वास्य देव्याः वासवदत्तायाः शुद्धताम् आत्मनश्च निःस्वार्थराज्यभक्तिं प्रमाणयितुं प्राङ्मुखोपविष्टो यौगन्धरायणः उवाच—'यद्यहं राजशुभेच्छुः समुत्कृष्टबुद्धिमती शुद्धिमती च देवी वासवदत्ता तदा हे लोकपालाः, सर्वमेतद् युष्माभिः उचेलिमम्, येन युष्माकं वाचम् उपनिषत्कृत्य राजा सर्वथा विश्वासपरो भवेत्। अन्यथा अद्यैव अहम् आत्मतनुम् अतनूष्मणि तनूनपाति पातयित्वा भस्मसात्करोमि'। एवं लोकपालान् स्वार्थराजशुभैषणयोः मध्येकृत्य उक्तवचसि राजभक्तिपरायणे यौगन्धरायणे निवचनेकृत्य स्थिते सति एवं दिव्या वाक् समुदभूत्—'राजन्, धन्यस्त्वम्, यस्य एवंभूतो मंत्री यौगन्धरायणः, एवं भूता सर्वथा विशुद्धा निर्दोषा पत्नी[2] च' इति।

48. एतदाकर्ण्य गोपालकसहितो वत्सेशो 'मन्त्रिन्, धन्यस्त्वम्, य एवं निजनीतिशक्त्या पद्मावतीमनुनेतुं मगधान् गतः तत्र अपरिगणिताशिवानशितः यथेष्टं कारिकाकृत्य माम् उपकर्त्तुं वासवदत्तायाः आत्मनश्च चरित्रमेवमुदात्तं प्रदर्शितवान्'। इत्थं यौगन्धरायणाचरितं सर्वं प्रशंसन् गोपालकगृहात् वासवदत्ताम् आत्मावासम् आनाय्य मूर्तिमतीभ्यां रतिनिर्वृतिभ्यामिव वासवदत्तापद्मावतीभ्यां सह अकुतोभयः लावाणके परमोत्सवेन उवास।

---

१. 'अव्ययीभावे शरत्प्रभृतिभ्यः' 'प्रतिपरसमनुभ्योऽक्ष्णः'।

२. 'पत्युर्नो यज्ञसंयोगे'।

49. अन्येद्युः स्नानानन्तरं परिहितनत्रकतान्तवांशुकौ वत्सराजः सम्पादितभोजनादिदिनकृत्यः विविक्ते गोपालकम् रुमण्वन्तम् यौगन्धरायणं वसन्तकं चाहूय विभिन्नाः विस्रम्भिणीः कथाः कथयन् यौगन्धरायणेन उक्तः—देव, पत्युः हितैषिता एव सत्पत्नीलक्षणम्, न तु प्रियकारित्वमात्रम्। एवं राज्यकार्यभारैकचिन्तनं राजच्छन्दानुरोधनं च उपजीविलक्षणमिति शत्रुरूपेण मगधराजेन सह सन्धित्सया पृथिवीविजयहेतुना च आपन्न[1]-जीविकैः अस्माभिरित्थं प्रायासि। अतो हे देव, भावत्कभक्त्यनुभूतासह्य-वियोगा देवी न कथमप्यपराध्यति सा तु भवन्तं पूर्णतया उपाकार्षीत्'। एतदाकर्ण्य वत्सेशः 'मन्त्रिन्, भावत्कं सर्वं चातुर्यमहं जाने। देव्याः शीलौ-दार्येण चारित्रेण चाप्यहं सम्यक् परिचितस्तथापि भवदनुरागमनसा प्रणयाधिक्येन वा यत्किञ्चिदसमञ्जसमुक्तम् तन्मर्षणीयम्' एवंप्रायैरालापैः तद्दिनं तैः सह निनाय।

50. परेद्यवि मगधेशेन प्रेषितो दूतः समागत्य वत्सेशम् इत्थं विज्ञा-पितवान् यत् 'त्वदीयमन्त्रिभिर्वयं वञ्चिताः किन्तु त्वया अधुना एवं विधेयं येन पद्मावतीविषयकशोकेन अस्माकं जीवनं शोकमयं न भवेत्'। स च एतदाकर्ण्य तं दूतं पद्मावत्याः अन्तिकं प्रेषितवान्। सापि चातिनम्रतया दूतं स्वसन्निधौ उपवेश्य तस्मात् स्वपित्रोः अनामयं पृच्छन्ती तेन सर्वथा तत्रत्यं वार्तम् अभिहिता—'पुत्रि, व्याजेन अस्मात् नीतायास्ते पतिम् अन्यासक्तम् अनुचिन्तयन् अहं नक्तंदिवम् अनुतपामि'। एवमुक्तसन्देशं सन्देशहरञ्चोवाच, 'भद्र, तातोऽम्बा च मद्वाचा वाच्यौ यत् अनुतापस्य न कोऽपि विषयः। आर्यपुत्रो हि मयि सातिशयं दयोदयः; वासवदत्ता चापि मयि स्वस्वसरि इव सस्नेहा इति लेशमात्रेणापि शोकेन अलम्'। एवं प्रतिसन्दिश्य सत्कृते दूते मगधान् प्रति निवर्तिते तत्र चोक्तेन पद्मावती-सन्देशेन अतितुष्टो मगधेश्वरो वासवदत्तां प्रति सर्वथा आत्मसन्तोषम् अभिव्यक्तवान् तथैव चण्डमहासेनोऽपि पद्मावतीं प्रति अतिशयं स्वकीयं स्नेहभावं दूतमुखेन प्रकाशितवान्। एवं श्वशुरद्वयसन्तोषप्रवर्द्धितप्रमोदो

---

१. 'प्राप्तापन्ने च द्वितीयया'।

वत्सेशो यौगन्धरायणपरामृष्ट्या अन्येद्युः जराजीर्णदेहमपि महाबलसम्पन्नम्, मागधमपि अविगीतप्रशस्तिम् पद्मावतीपितरम् आमन्त्र्य विविधान्यदुर्लभवसुधान्यसमेधितवसुधान् मगधान् परित्यज्य वर्णका[1]-प्रावारितधृतकर्णिकावर्णिका[2]स्तूयमानमृडानीम्[3], क्वचिदुपाध्याया[4]ध्याप्यमानकठी[5]बह्वृचीम्, इतरत्र पौरपुरन्ध्रीवर्गाश्वास्यमानाशिश्वीम्[6], अतिरतिरूपाङ्गनोपहस्यमानवृषाकपायीम्,[7] स्वीयपातिव्रत्यशीलशैत्यशस्यमानाग्नायीम्[8], सामाजिकनियमनिरूपणविदुषितराधरीक्रियमाणमनायीम्[9], सवृषलीम्[10] अपि अवृषलीम्' गोपीमपि[11] अश्वपालिकाम्,[12] सवामोरुभार्यामपि[13] अवामोरुभार्याम्, सशिवामपि अशर्वाणीम्, वर्तमानगौरी[14]मपि अभ्यर्च्यमानकालीम्, विद्यमानसुनासिकामपि[15] अनासिकाम्, सत्सुपदीमपि[16] पङ्गूम्,[17] सदाक्षी[18]मपि अदाक्षीम् सद्बहुयर्यवर्यामपि चासद्बहुवर्यवर्याम्, मन्दुरावद्धबहुमुखरश्टङ्खलाकर्षिस्तम्बेरमवनायुदेश्यवाहाम् गृहपालितैणी[19]खुरखर्ज्यमानकर्णजाहाम्, शतक्रीतीभिः[20] घटोध्नीभिः[21] अनड्वाहीभिः[22] राजमहिषीभिः सप्रजाभिः अजाभिस्तथा देवमण्यादिगुणक्रीताभिः[23] बह्वीभिः[24] कल्याणक्रोडाभिः[25] द्विक्रमेलकाभिः[26] सदागतिसम्मुखीभिः अपि अपरपतिपराङ्मुखीभिः, सदानभोगमयीभिरिव हयीभिः[27]

---

१. 'वर्णका तान्तवे'। २. स्तोत्रकर्त्री। ३. 'इन्द्रवरुणभवशर्वरुद्र०—'। ४. या स्वयमध्यापिका तत्र वा ङीष्। ५. शाखाध्येतृवाचित्वेन जातिलक्षणा ङीष्। ६. 'सख्यशिश्वीति भाषायाम्'। ७-८. 'वृषाकप्यग्नि०' इत्यादिना उदात्त ऐकारो ङीप् च। ९. 'मनो रौ वा' इति वैकल्पिकैकारो ङीप्। १०. 'जातेरस्त्रीविषयादयोपधात्'। ११. 'पुंयोगादाख्यायाम्'। १२. 'पालकान्तान्न'। १३. 'संहितशफलक्षणवामादेश्च'। १४. 'षिद्गौरादिभ्यश्च'। १५. 'नासिकोदरौष्ठ०' इत्यादिना वैकल्पिको ङीष्। १६. 'संख्यासुपूर्वस्य,' 'पादोऽन्यतरस्याम्'। १७. 'पङ्गोश्च'। १८. 'इतो मनुष्यजातेः'। १९. मृगी। २०. 'क्रीतात् करणपूर्वात्'। २१. 'ऊधसोऽनङ्', 'बहुव्रीहेरूधसो ङीष्'। २२. 'आमनुडुहः स्त्रियां वा'। २३. 'क्रीतात्करणपूर्वात्' इत्यस्य क्वाचित्कत्वात् अत्र न ङीष्। २४. 'बह्वादिभ्यश्च'। २५. 'न क्रोडादिबह्वचः'। २६. 'अपरिमाणविस्ताचितेति ङीपो निषेधः। २७. 'योपधप्रतिषेधे हयगवय०' इत्यादिसहकारेण जातिलक्षणा ङीप्।

युक्ताम् कौशाम्बीम् अनुप्रतस्थे । कतिपयैरेव च अहोभिः वत्सराजो दयितायुतोऽयुतोच्छ्रितरक्तपताकाम् द्वारस्थापितमङ्गलोदकुम्भाम्, आनन्द-संलापपरपुरजनकोलाहलबहुलाम् उशीरचन्दनद्रवसेकपिच्छिलरथ्याम् । राजधानीम् अश्वषड्गवसमूढरथम् आरूढः, वामाङ्कविभूषितदयितः वसन्तकादिनिजहितैषिसहितः पौरकन्याविकीर्यमाणलाजापुष्पप्रकरैः अवकीर्यमाणः सविविधवाद्यघोषं मागधजनोच्चरदालोकः समन्तात् सध्यक्सामन्तलोकः राजधानीं प्रविवेश ।

51. यत्र च प्रसाधितनागा[1]निभकवरी[2] यथेच्छं शोणीं[3] रोहिणीं[4] नीलां कल्माषीं[5] वा शाटीं परिदधाना स्त्रैणी[6] मृद्वी[7], मृद्वीकानीकाशवाचा वत्सेशदयिताप्रेमसौजन्यं खरुम्[8] आलपति । यत्रत्या हि नरपुङ्गवाः महिषीवल्लभा अपि वृषोत्पादिनः, या च नगरी प्रातिभेन ब्रह्मसूत्रेण उपनिषदा गोष्ठ्या, गीतया गीत्या, सुवर्णमयेन अलङ्कारेण प्रकृष्टेनच्छन्दानुरोधेन प्रसादकेन गुणेन हास्येन च रसेन, सुमधुरया भाषया, आन्वीक्षिकीभिः प्रस्थानत्रयीमयीभिरिव, साहित्यविग्रहिणीभिरपि अविग्रहिणीभिः अजतनयाभिरपि अनजातनयाभिः, निर्जरायुतनयाभिरिति द्व्यहीन-मासीन-द्विसमीन-तनयाभिः युवतिभिः[9] जरतीभिः युवजरतीभिः कुमारीभिः[10] सप्रतीहारीभिः नारीभिश्च[11] उपजहासेव विश्वामित्रकृत्रिमत्रिविष्टपम् ।

●

---

१-२. 'जानपदकुण्ड'—इत्यादिना साधु । ३. 'शोणात् प्राचाम्' । ४. 'वर्णादनुदात्तात्०' । ५. 'अन्यतो ङीप्' । ६. 'नञ्स्नञ्०' इत्यादिना ङीप् । ७. 'वोतो गुणवचनात्' । ८. 'खरुसंयोगोपधान्न' । ९. 'यूनस्तिः' । १०. 'वयसि प्रथमे' । ११. 'नृनरयोर्वृद्धिश्च ।'

# समासतद्धितनिर्देशात्मकः
# तृतीयो विलासः

### *उदयनस्य प्राप्तसिंहासनारोहणम्*

52. एकस्मिन् दिने राजसभामण्डपमलङ्कुर्वाणस्य नृपस्य द्वारि समागतः एको ब्राह्मणः अब्रह्मण्यम् उद्घोषयन् आह—'देव, विविधपशुशरण्ये अरण्ये पापैः गोपैः अकारणमेव मम पुत्रस्य पादच्छेदो विहितः। एतदाकर्ण्य द्वित्रान् गोपालकान् आहूय राजा तं द्विजव्यथाकरं व्यतिकरं पप्रच्छेति तेषामन्यतमः एवं सविस्तरमुत्तरयति स्म—'देव राज्यपालका भूत्वा क्रीडद्भिरस्माभिः सोमाख्यो गोपालकः राजा विहितः। अनुल्लङ्घितशासनश्च[1] स सर्वानस्मान् अन्वशिषत्। तेनैव वर्त्मना अस्य विप्रस्य अयं तनयः निरगच्छत्। स च अस्माकं राजानम् अप्रणम्य गच्छन् एहीडया[2] वाचा-आकारितोऽपि अस्मान् अवधूय हसन्नग्रे प्रचलितः इत्यविनीतं तं पादच्छेदेन निग्रहीतुं सोमगोपालकेन आज्ञप्तैः राजाज्ञोल्लङ्घनाक्षमैश्च अस्माभिः धावित्वा अस्य पादच्छेदो विहितः'। इत्थं निशम्य नृपस्तान् तद्बालिशत्वस्य कृते नितरां निर्भर्त्स्य भूसुरं च विपुलभूमिसुवर्णरत्नादिप्रदानेन निष्कृत्य विसर्जयामास। गतेषु तेषु राजानं रहसि यौगन्धरायणः उवाच—'देव, नूनं तत्स्थानेन निहित[3]निधानादिना भवितव्यं यत्प्रभावेण अयं स्वल्पगुः[4] गोपालकोऽपि एवमीष्टे अतः अविलम्बं[5] तत्र गम्यताम्'। इत्थं मन्त्रिणोक्तो राजा तद्गोपालकपुरस्सरः समन्त्रिसैन्यः[6] तत्र गतो यावदेव भूमिं परीक्ष्य

---

१. न उल्लङ्घितं शासनं यस्य—'अनेकमन्यपदार्थे'। २. एहि ईड इति यस्यां क्रियायाम् सा एडीहा तया—'एहीडादयोऽन्यपदार्थे'। ३. 'निष्ठा' इत्यनेन निहितस्य पूर्वप्रयोगः। ४. 'गोस्त्रियोरुपर्जनस्य'। ५. 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः'। ६. 'तेन सहेति तुल्ययोगे,' 'वोपसर्जनस्य'।

कर्मिभिः खानयति तावदेव शैलाकृतिः एको यक्षः अधस्ताद् उत्थायेत्थमाह—'राजन्, स्वपितामहनिखातम् इमं शेवधिम् अङ्गीकुरुष्व'। एवमुक्त्वा स्वीकृतवत्सेशकृतसपर्ये यक्षे अन्तर्हिते तस्मादवटाद् झटिति महार्हसिंहासनसमेतो महान् निधिरेकः आविरभूत्। तं च सर्वं सिंहासनसमेतं समाददानो वत्सेशो निजनगरीमागत्य प्रजाजनताडितानन्ददुन्दुभिध्वानैः सह प्रजाभिः दृश्यमानम् अन्तर्निजप्रसादम् अतिष्ठिपत्। मन्त्रिणोऽपि चैतेन राज्ञः सर्वथा आमुखापातिकल्याणं ज्ञात्वा निरतिशयोत्सवैस्तद्दिनं निन्युः।

53. परस्मिन् दिने वत्सेश्वराभिप्रायं जिज्ञासुः यौगन्धरायणः तमुवाच—'राजन्, कुलक्रमायातम् एतत्सिंहासनं भवता समासादितम् अतः एतदारुह्य सनाथीक्रियताम्' इति। एवमुक्तो वत्सेशो जगाद—'विजितसकलपृथिवीकैः[1] मदीयैः पूर्वजैः एतत्सिंहासनम् आरूढचरम्। अतः कथमेकपदे एव मया एतदारोहणीयम्?' इति। एवमभिजातानुरूपम् अभिदधानः स स्वमन्त्रिणा ससाधुवादम् प्रशस्यमानः प्राच्यादिदिग्विजयाय उद्योगं कर्त्तुम् अवाचि। अतो दिग्विजयस्य निर्विघ्नपरिसमाप्त्यर्थं भगवतः कण्ठेकालस्य[2] आरिराधयिषया तपस्यन्तं [3]त्रिरात्रोपोषितं तं भूपतिमतिसन्तुष्टः शिवः अपररात्रे[4] निर्विघ्नं तद्दिग्विजयं शीघ्रमेव सर्वविद्याधराधीशत्वं पुत्रावाप्तिं च समादिशत् इति शम्भुप्रसादपरीततपःक्लान्तिकमनीयः, प्रजाजननमनीयः राजा, प्रातःकाले तत्स्वप्नं सचिवान् व्रतोपवासक्लान्ते कान्ते पद्मावतीवासदत्ते च श्रावं श्रावं तर्पयित्वा उत्सवव्यग्रपौरां व्रतपारणां व्यदधात्।

54. परेद्यवि यौगन्धरायणो राजानमागत्याह—'राजन् धन्यो भवान्, भगवान् भवो भूत्यै यस्य एवं प्रसन्नः। तदिदानीं शत्रून् विजित्य स्वभुजार्जितां लक्ष्मीम् प्रनष्टमपि च चिरभूमिष्ठं निजपूर्वजसम्भृतमि-

---

१. 'नद्यृतश्च,' 'स्त्रियाः पुंवद्भाषित०' केऽणः', 'न कपि'। २. 'सप्तमीविशेषणे बहुव्रीहौ,' 'हलदन्तात् सप्तम्याः संज्ञायाम्'। ३. 'तिसृणां रात्रीणां समाहारः त्रिरात्रम्, तद्धितार्थे समासः ततः 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इत्यच्। ४. अपरं रात्रेरिति विग्रहे 'पूर्वापराधरोत्तर०' इति समासे 'अहः सर्वैकदेश०' इत्यच्।

दानीम् उपलब्धम् इमम् अक्षय्यनिधिं सिंहासनं च भजस्वेति । अमात्यमुख्येन एवमुक्तो वत्सेश्वरः भयानकसायकनिकायवर्षिणा अमर्षिणा दर्पेण यवीयसां पापीयसां विसरम् उत्सारयितुम् कल्याणवाणीप्रमाणैः[1] पुरोहितैः निर्दिष्टे शुभे दिवसे दिग्विजयप्रयाणारम्भम् आदिशत् । यात्रासंरम्भे च विजयाशंसिभिर्निसिक्तः अतिप्रीतः गजताश्वीयपदिकधानुष्कासिकप्रासिकपारश्वधिकशाक्तीकयाष्टीकादिविविधसेनापरिच्छदसुसज्जितः क्रमशः प्राच्यादिदिशो वशतामानयन् तत्रत्यान् कांश्चित् कठोरान् किंराजन्यान्[2] च समूलमुन्मूलयन् प्रातीपिकान् उच्छिन्नसच्छीलान् दुर्हृदो[3] म्लेच्छांश्च सद्यश्छिन्नगलगलच्छोणितच्छुरितकौक्षेयकेण खण्डशः कुर्वन् तुरुष्कतुरगव्रातांश्च निजविकटकरटिघटाभिर्दलयन् चञ्चत्कचग्रहत्कस्वकीयकरवालेन चान्यानपि रिपून् शर्पच्छेदिकान् विधाय शत्रुसैन्यकवोष्णाम्बुनिधौ निदधौ । भयस्तिमितविद्विषश्चास्य दन्तिनां, नदन्तीनां चमूनां च प्रतीपो नादः केवलं गिरिगह्वरेषु शुश्रुवे ।

55. इत्थं निजबलजलनिधिवीचीनीचीकृतविविधभूभृद्भुजदम्भविजृम्भः, समुन्मथितप्रातिपथिको वत्सेशो वसुधां विजित्य प्रथितमहायशस्कः[4] कौशाम्बीं परावर्तितः स्वामिविजयोत्सवेन उत्पतत्पताकाभुजलताभिः नृत्यन्तीमिव राजधानीमासाद्य चारणैरुच्चैरुद्गीयमानः वन्दिभिश्च स्तूयमानः कापुरुषैरीर्ष्यमाणः विद्वद्वृन्दारकैः आशीर्भिरभ्यर्च्यमानः राजभवनमाससाद । तत्र च निवसन् विनम्रेषु भूपेषु शासनमधिरोप्य तौर्यमङ्गलतारधीरस्वप्रतिरवैः मन्त्रिमुख्यपरितोषितलोकपालप्रतिदिशप्रदत्तसाधुवादैः सह निधानाधिगतं कुलोचितं सिंहासनम् आरुरोह, वसुधाविजयार्जित च वसु वासवोपमः स वीतलोभः सन् सत्कारपूर्वकं द्विजेभ्यो वितरन् कृतमहोत्सवः सर्वं स्वसेवकवर्गं कृतार्थमकरोत् ।

---

१. कल्याणवाणी प्रमाणी यस्येति बहुव्रीहौ 'अप्पूरणीप्रमाण्योः' इत्यप् ।
२. कुत्सिताः राजन्याः तान्, 'किं क्षेपे' । ३. 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति हृदयस्य हृन्निपात्यते । ४. शेषाद्विभाषा' ।

56. इत्थं कौशाम्ब्याम् रुमण्वद्यौगन्धरायणाधिकृतराज्यभारो वत्सेशो, मार्दङ्गिकवैणिक[1]वैणविकादिविविधवादकैर्विनोद्यमानः कदाचिच्च वासवदत्तया अन्यैश्चापि स्वानुजीविसभ्यसङ्गीतप्राचार्यैः सह स्वयं वीणां वादयन् अन्यदा च जलजाद्या[2] पद्मावत्या सह कुशलकुशीलवकुलशीलित-विचित्रवादित्रकलशीरवविवशीकृतमनाः संगीतकं वा सेवमानः समयम् अत्यवाहयत्। एवं कदाचित् विविधविबुधैः सह शास्त्रसागरम् अमन्थत, अन्यदा च अलंपुरुषीणो व्यूढोरस्कः[3] अतिमल्लो मल्लशाले मल्लितमल-मलल्कमतल्लिको मल्लकैः अवल्लत् ।

57. एवं सुखोपभोगेषु वर्तमानं अर्थधर्मौ[4] चापि चिन्तयन्तं तम् एकदा आस्थानमण्डपस्थितं समागतो मुनिर्नारदः स्वीकृतातिप्रह्वीभूततत्सम्पादितातिथ्यः समुवाच—'वत्सेश्वर, हरिहरा[5]राधनपरायणाः पितृपूजका[6] तव पूर्वजाः पाण्डुप्रभृतयो मम प्रीतिभाजः आसन्निति तत्सम्बन्धेन त्वं मे प्रेयान् । अतः अतिमाङ्गलिकं तवाभीष्टमेकं मया उच्चार्यमाणं शृणु—'अनङ्ग-सम्भूत्यै रत्या स्तुतिभिः पुनः पुनः प्रार्थितः पुरा पुरारातिः रहसि तामित्थ-मुवाच यत् निजांशेन भूमौ अवतीर्य सुतमिच्छन्ती सती मामाराध्य स्वयं कामं जनयिष्यतीति चण्डसेनसुतारूपेण अवतीर्णा सा वासवदत्ता त्वदीया भार्या संवृत्ता, सा चैषा समाराधितकामारिः कामांशं सुतं सविष्यते, स च यथाकालं सर्वविद्याधरसम्राट् सम्पत्स्यते'। एवमुक्त्वा दिवमुत्पतिते नारदे संजातजातेच्छया वासवदत्तया सह तद्दिनं निनाय उदयनः ।

58. एवं गच्छत्सु दिनेषु एकदा तत्र स्वकीयैः पञ्चभिः पुत्रैः सह शरावान् विक्रेतुमेका कुम्भकारी समाजगाम । तामालोक्य वासवदत्ता पार्श्ववर्तीयां पिंगलाक्षीति पिंगलिकानामधेयाम् निजसखीमुवाच—'सखि इमां कुम्भकारीमालोकय । इयं हि पुत्राणां पात्रम् इति अस्याः पञ्च

---

१. 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' । २. 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्,' ततः 'षिद्गौरादिभ्यश्च,' । ३. 'उरःप्रभृतिभ्यः कप्', 'कस्कादिषु च', । ४. 'राजदन्तादिषु परम्', 'धर्मादिष्वनियमः' । ५. 'द्वन्द्वे घि', । ६. 'पिता मात्रा' ।

पुत्राः। मम तु अद्यापि नैकोऽपि वर्तते इतीयं न मादृशी अननुभूतात्मीय-सन्ततिमुखतीयशोभासुखोद्भूतसन्तापसन्तप्ता वर्तते। एवमुक्तवतीं वासव-दत्तां पिङ्गलिका अब्रवीत्—'देवि, पापभूयिष्ठा प्रेष्ठा प्रजेयं दरिद्रेष्वेव भूयसी, युष्मादृक्षेषु च जनेषु कश्चिदुत्तमपुण्यात्मैव जायते इति त्वरया अलम्। अत्रभवती अपि अनतिचिरेण अवाप्तोचितसुतसुखा भविष्यतीति।

59. पिङ्गलिकया इत्थमुक्ता सुतजन्मोत्सुका वासवदत्ता तत्क्षणमाग-तेन वत्सेशेन उक्ता 'देवि गिरिशाराधनप्राप्यं पुत्रं नारदोऽस्मभ्यमभ्यधात् इत्यस्माभिः अवश्यं वश्यं नेयः समाराधनेन वरदो गिरिशः'। इत्थमुक्ता देवी च आशुतोषम् आशु तोषयितुं विधिवद् व्रतं कर्तुम् आरेभे। गृहीत-व्रतायां च तस्यां वत्सेशोऽपि निजमन्त्रिभिः सह शंकरसमाराधनसंलग्नः समजायत इति त्रिरात्रोपोषितयोः तयोः स्वप्ने स्वयं शम्भुः समादिशत्—'युष्मत्समाराधनया अहमतितुष्टः इति भावत्कपुत्रकाम्यासिद्धये मदीयः अस्तुङ्कारः[1]। युवयोः मारांशावतारः कुमारः जनिता। भविता च स मत्प्रसादेन विद्याधराधारः'। एवमुदितगिरि गिरिशे अन्तर्हिते सपदि सम-धिगतवरसम्मदम् अवाप्य कृतार्थौ दम्पती[2] प्रातरुत्थाय निर्वर्तिताह्निक-कृत्यौ सर्वाः प्रजाः तत्स्वप्नसूचनसुधासिञ्चनेन सन्तर्पयन्तौ निजव्रतपारणां कृतवन्तौ। कतिपयदिवसापगमे चैकस्यां रात्रौ स्वप्ने वासवदत्तायै कश्चि-ज्जटिलो ब्रह्मचारी समुपेत्य एकं फलमददात् इति स्वाभीष्टसाधकमाङ्ग-लिकस्वप्नेन सुतविषयकमनोरथपूर्तिम् अदूरगां गणयन् गणरात्रम्[3] अगम-यद् वत्सेशः।

60. अथ वासवदत्ता दधार मारांशावतारससारगर्भम्, अतो येषु येषु वस्तुषु दोहदिनी सा यद् यद् एव अभिललाष तत् तत् सर्वं वत्सराजेन पूर्णीकृतम् अलभत। एकदा च तस्या हृदि विद्याधरोदारकथाशुश्रूषायाः दोहदः समुदपादि इति तत्पूर्तये समभ्यर्थितो यौगन्धरायणः शृण्वत्सु

---

१. 'अस्तोश्चेति वक्तव्यम्' इति मुम्। २. जाया च पतिश्चेति द्वन्द्वे जाया-शब्दस्य दम्भावनिपातः। ३. गणशब्दस्य 'बहुगणवतुडति संख्या' इति संख्यात्वे गणानां रात्रीणां समाहार इति विग्रहे तद्धितार्थे समासे अच्।

तत्रत्यसर्वपारिषद्येषु विद्याधराणां विविधाः हृद्याः कथाः कथयित्वा तस्याः अभिलाषपूर्तिं चकार। यौगन्धरायणमुखाच्च ताः कथाः श्रुत्वा अतिशयं मोदमाना वासवदत्ता मागधीभार्यस्य¹ वत्सेशस्य समीपे वर्तमाना भाविविद्याधरेन्द्रनिजतनूजविषयकविविधवार्ताभिः तद्दिनम् अनैषीत्।

### नरवाहनदत्तोत्पत्तिः

61. परस्मिन् दिने सचिवैर्युक्तं समीपस्थं वत्सराजं वासवदत्ता उवाच—'आर्यपुत्र, यतः प्रभृति अयं गर्भो मया धृतः ततः प्रभृत्येव तीव्रा तद्रक्षाचिन्ता मां बाधते। अद्य तच्चिन्ताक्रान्तैव सुप्ता अहं निशि कयाचित् भस्माङ्गरागसितया, पिशङ्गजटाकलापया शूलहस्तया च मूर्त्या अनुकम्पासम्पादनपुरस्सरम् उक्ता, 'पुत्रि, गर्भस्य कृते त्वया चिन्ता न कार्या। स मयैव दत्तः इति मया तस्य रक्षा क्रियते', एवमुक्त्वा अन्तर्हितायां तन्मूर्तौ अहं प्रबुद्धा तमिस्रा चापि अरुणकिरणैः अपसार्यमाणा रसातलं शरणार्थमशिश्रियत्'।

62. एवमित्यादिभिः अन्यैरपि च भविष्यन्निजतनूजसम्बद्धैरालापैः अतिवाह्यमानेषु दिवसेषु सर्वेषां मन्त्रिणां शुभलक्षणाः भाविकल्याणसूचकाः क्रमेण पुत्राः उत्पन्नाः। प्रथमं तावत् यौगन्धरायणस्य मरुभूतिरितिविश्रुतः तनयो जातः ततो रुमण्वतो हरिशिखः वसन्तकस्य तपन्तकः, नित्योदिताख्यस्य इत्यकापरसंज्ञस्य प्रतिहाराधिकारिणो गोमुख इति पुत्रोऽजायत। तेषु च जातेषु महोत्सवे वर्तमाने नभसः अशरीरिणी वाक् उदपद्यत यद् भाविनः चक्रवर्तिनः वत्सराजसुतस्य मन्त्रिणः अमी वैरिवंशदावाग्नयो भविष्यन्ति' इति।

63, अतिक्रामत्सु च संख्यातरात्रेषु समासन्नप्रसवोदया देवी वासवदत्ता सार्कशमीसंरक्षितगवाक्षकम् पुरन्ध्रीपरिष्कृतम्, विचित्रचित्रचित्रितम् यन्त्रमन्त्रज्ञैरनेकाभिमंत्रितयंत्रतंत्रादिसुरक्षितम्, गर्भरक्षाक्षमम्, दुरितदुर्जयदुर्गमिव दुग्धदूर्वादधिमधुप्राज्याज्यभ्राजितम्, विविधरत्नदीपप्रभाभासितम्

१. 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावाभावः।

एकतः संस्थापितविविधायुधम् प्रसूतिकागृहम् अध्यास्त। असूत च सा काले तत्र द्यौः निर्गच्छदच्छामृतमयद्युतिकुमुदिनीकान्तम् इव एकान्तरमणीयं द्वितीयं मारमिव कुमारम्। जातेन च येन तत्प्रसूतिकागृहं सान्तःपुरवासिजननीहृदयेन सह प्राकाशीति प्रसरत्प्रमोदाऽभ्यन्तरगृहात् आगत्य वत्सेशाय कुमारोत्पत्तिप्रियनिवेदिने तस्मिन् दिने, किञ्चिदपि माहेयं[1] स्वापतेयं[2] नादेयं[3] दूडाशं[4] वा अभवत्। ततः अन्तःपुरमुपेत्य औत्सुक्य कृष्टचेतसा रक्ताधरायतदलम् साम्राज्यलक्ष्मीलीलाम्बुजमिव चारुचिबुकचञ्चुकम् आयतललाटम्, सद्यःसमुत्पन्नशिशुम् समवलोक्य वात्सल्यस्नेहेन स्रवतीव सम्राजि वत्सेशे नन्दत्सु अपि च यौगन्धरायणादिषु मन्त्रिषु गगनगीरियमुदीरिता अश्रूयत—'राजन्, अयं तवात्मजः कामांशावतारः। आख्यया एनं नरवाहनदत्तम्, सर्वविद्याधरेन्द्रम् भाविचक्रवर्तिनञ्चावेहि' एवमुक्त्वा विरतायां नभोवाचि, दुन्दुभिध्वानसहितायां सञ्जातायाञ्च त्रिविष्टपात् पुष्पवृष्टौ इष्टावाप्तिहृष्टो राजा स्वविभवानुरूपं बहुशः[5] भोजनम्, अनेकशः[6] वस्त्रम्, माषशः[7] सुवर्णम्, प्रस्थशः[8] धान्यम् प्रत्यभ्यागतदीनम् तथा पञ्चनिष्ककिकाम्[9] पञ्चमोदकिकाञ्च प्रतिप्रतिष्ठितप्राज्ञं तत्क्षणं वितीर्य मासिकं महोत्सवं कर्त्तुम् निजनगरमाज्ञापयामास।

64. व्रजत्सु अथ दिवसेषु वलक्षपक्षेन्दोरिव अन्वहं वर्द्धमानस्य नरवाहनदत्तस्य स्फुरन्मसृणमुग्धनखप्रभाणि द्वित्राणि खचद्दन्ताङ्कुराणि दृष्ट्वा स्खलद्वाक्यपदानि च निशम्यातितरां तुतोष वत्सेशः। अथ मन्त्रिवराः समागत्य शिशवे राजसूनवे विनयगौरवपुषो विधृतवपुषो हृदयानन्दान् स्वसुतान् समर्पयामासुः। इत्थं यौगन्धरायणिः मरुभूतिः, रौमण्वतो हरिशिखः, ऐत्यकिः गोमुखः, वासन्तकिः तपन्तकः इमे सर्वे मन्त्रिपुत्रकाः तथा पिङ्गलिकाया यमजौ पुत्रौ चैते षडपि महोदयहेतुभूताः षड्गुणा इव तत्सहचारिणः समजायन्तेत्येभिः सह क्रीडाकलितललिताव्यक्तनर्माभिलापं प्रीति-

---

१. 'नद्यादिभ्यो ढक्'। २. 'पथ्यतिथिवसतिस्वपते र्ढञ्'। ३. न अदेयम्। ४. दुःखेन दाश्यते (दीयते) इति 'ईषद्दुःसुषु०' इति खल् ततः 'दुरोदाशनाश०' इति उत्वष्टुत्वे। ५. 'बह्वल्पार्थात्०' इति शस्। ६-८. 'संख्यैकवचनाच्च वीप्सायाम्'। ९. 'दण्डव्यवसर्गयोश्च'।

प्रवणमनसां नृपाणाम् अङ्कतोऽङ्कं यान्तं सबहुमानं विराजद्वीर-लक्ष्मीविभूषणं स्मेराननसरसिजं निजात्मजं सप्रमोदं पश्यतो भार्याद्वितीयस्य वत्सेशस्य सानन्दा दिवसा व्यतिजग्मुः। यथासमयसम्पादितान्नप्राशनभद्राकरणादिसंस्कारो नरवाहनदत्तश्चापि अनुदिनमभिवर्द्धमानः तन्मङ्गलकामनया हरिहरादिदेवपूजनपरायणाभ्यां दम्पतीभ्याञ्चानिशं सस्नेहं पाल्यमानः अष्टवत्सरजातः गुरुभिर्विनीयमानः गुणैरापूर्यमाणेन सद्वंशजेन धनुषा इव वपुषा अतिशयशोभासम्पन्नः मन्त्रिपुत्रैः सह रमणीयात्मारामेषु रममाणः अवर्तत।

65. अस्मिन्नेव काले वितस्तातीरे निवसदनेकदक्षतक्षा किलासीत् तक्षशिलाभिधानं दधाना नगरी। तस्यां चाशिषत् प्राज्यराज्यप्रथितनिजनिष्पक्षनायः स्वसौन्दर्यविहसिताकायः धर्मार्थपरायणबुद्धिः राजकार्यावहितात्मोदयपरज्यानिः तारादत्ताजानिः[1] कलिंगदत्तनामा नृपतिः। राजधुरां[2] धारयमाणस्य, धर्मपथे वर्तमानस्य, जायया सह शिवकेशवो[3]पासनपरायणस्य, ईशकृष्ण[4]भक्तस्य चातिसुखिनः तस्य सुराज्ञः[5] पत्नी यथाकालं स्वरूपोपहसितरतिरूपाम् अनन्यसदृशीमवन्यां कन्यां प्रासोष्ट। कलिंगदत्तोऽपि च जातां जातां तादृशीमवलोक्य दिव्यां तां सम्भावयन् अप्युत्कटपुत्रकाम्यः शोककन्दानन्दनन्दनयोः सुतासुतयोः[6] महदन्तरमनुभवन् तत्कन्याजन्यूत्पन्नमन्युः केनापि वृद्धेन द्विजन्मनोक्तः—'राजन् शुचा अलम्; ऐहिकामुष्मिकशिवायोत्पन्ना कन्या राज्यादिसम्पत्तिलुब्धपुत्रोत्पत्तिं सर्वथा अतिशेते। कुन्त्यादिकन्याः गुणैरेव एवं ख्यातिं भुवि गताः। किंच अन्यदानं सुतादानस्य षोडशीमपि कलां नार्हति। भवादृक्षाणां गृहे च न तु सामान्यपुण्यानाम् अपि तु दिव्यानामेव जन्म सम्भवतीति नूनमियं कन्या दिव्या तव गृहे समुपलब्धजननिः, जननीसन्तानासद्भावसन्तापसंहारिणी चमत्कारिणी च निजकुलस्येति एतज्जन्मना न मनागपि सन्तप्तव्यम्। कलिंगदत्तो निजगृहवृद्धद्विजन्मनो मुखात् एतदाकर्ण्य कर्णसुखदम्, अति-

---

१. तारादत्ता जाया यस्य 'जायाया निङ्'। २. 'ऋक्पूरब्धूःपथामानक्षे'। ३. 'अल्पाच्तरम्'। ४. 'अजाद्यदन्तम्'। ५. 'न पूजनात्'। ६. 'चार्थे द्वन्द्वः'।

सन्तुष्टः तदानीमपगतचिन्तासन्ततिरपि दिव्यसुतासन्ततिः नयनानन्ददायिनीं तां 'कलिंगसेना' इति नाम्ना अलंचकार। सा राजपुत्री चापि विहितमनःप्रसादप्रासादे सूक्ष्ममुक्ताफलरचिततरंगरम्यरंगरेखाराजिराजिताजिरे उत्तुंगशृङ्गसंगतमंगलध्वजे मातापित्रोः वेश्मनि वर्द्धमाना हेमन्तशिशिरवसन्तेषु[1] अविरलगलन्मधुमञ्जरीपुञ्जपिञ्जरितसरससहकारवननिकुञ्जपुञ्जितपक्षिकुलकलरवरमणीये, क्रीडोद्याने अनेकविधाभिः क्रीडाभिः विहरन्ती पित्रोर्मनांसि जहार।

66. एवं गच्छत्सु दिवसेषु एकदा व्योमचारिणी मयासुरसुता कलिंगसेनाम् अखिलव्यीकृत्य अकारणं संस्निह्यता मनसा तया सह जन्मान्तरप्रीतिमनुचिन्तयन्ती बालायास्तस्याः त्रासशङ्कया अलक्षमुत्तीर्य मनुष्यकन्यका-मतल्लिकाभावेन मुनिमानसमोहनीम् अनवद्यपाणिपादाद्यवयवाम्[2] तामुपससर्प। कलिंगसेना अपि भूरिदिव्यभव्याभरणावरणरमणीयरूपाम् सोमप्रभामवलोक्यैव सञ्जातप्रीतिः प्रदर्शितादरादरा तां समुपवेश्य तस्या अन्वयनामनी पर्यपृच्छत्। तां च तथा जिज्ञासापराम् अवलोक्य सोमप्रभा उवाच 'सखि त्रिलोकीविख्यातस्य मयनामकस्य असुरस्याहं कनिष्ठा सुता सोमप्रभा नाम। सा चाहं निजपित्रा अनेकधा मायायंत्राणि नभोगमनानि यानानि च निर्मातुं शिक्षिता विन्ध्याद्रौ वर्तमानेन निजजनकेन कुवेरसूनवे नलकूबराय प्रदत्ता'। एवमभिहिता हितातिप्रेयस्या वयस्यया तदानीं तया सत्रा तत्रालापैरेव मधुरैः परां कोटिं मुदोऽवाप। कलिङ्गसेना अथ प्रतीचीं ककुभमभिमुखीभूते भगवति भास्वति सोमप्रभा 'सखि चिरम् अतिष्ठम्, अवसायप्रायो दिवसः, इतः षष्टियोजन्यां[3] मदीयं गृहम्' इत्युक्त्वा कलिङ्गसेनाम् आमन्त्र्य भर्तृपराधीना नभोऽध्वनीना निजभवनम् अगमत्।

67. अन्येद्युः पुनरायाता सोमप्रभा रहसि कलिंगसेनामुवाच— 'सखि, मया त्वत्सख्यं निजपतिमावेद्य विदितयथार्थतः तस्मात् तवान्तिकम्

---

१. 'ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण'। २. 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्'। ३. 'संख्यापूर्वो द्विगुः' 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः', 'द्विगोः'।

अन्वहमागन्तुम् आज्ञा उपलब्धा। त्वमपि पितृभ्यां सर्वं निवेद्य तदनुज्ञाता भव, येन मया सह विहारे तव अनुकामीनत्वं न विहन्यात्'। एवमुक्ता कलिंगसेना सोमप्रभया सह स्वपित्रोः सविधमासाद्य तौ आख्यात-तदन्वयनामधेयौ अकरोत्। तावपि च दुहितृवात्सल्यात् तां महासुर-सुन्दरीं सत्कृत्य कलिंगसेनां च तद्धस्ते समर्प्य तयोः स्वैरविहारम् अनुमोदयामासतुः।

68. इत्थं तयोर्गच्छत्सु दिवसेषु एकदा सोमप्रभा कलिंगसेनाम-वोचत्—'त्वत्परिणयावधि एव आवयोः सख्यम् तदनन्तरं तव गृहे मदीया-गमनम् असम्भवम्। तदानीं हि श्वश्रूः स्नुषां वृकी अविमिव पीडयति, ननान्दृप्रदत्ता अपि वधूनां विविधास्ताडनाः। अतस्त्वदर्थं त्वहमेतादृशं भर्तृवेश्म कामये यत्र शठा पतिमाता याता वा न भवेत्'। एवमुक्त्वा समा-लिङ्गितोत्ककलिंगसेनायाः स्वसद्मप्रस्थितायाश्च सोमप्रभायाः स्नेहेन तन्मार्गमवेक्षितुं हर्म्याग्रभागस्थितां कलिंगसेनां दैवाद् गगनगतो मदन-वेगाख्यो युवा विद्याधराधिपोऽपश्यत्। तदवलोकनसमकालमेव अतिक्षोभं गतः सः अतिविद्याधरस्त्रियम्, अत्यप्सरसं तां कामयमानः 'न मदीयं यदीयं कलत्रं स्यात् निष्फलमेव मे जीवनं भवेत्' इत्याकलयत्। किन्तु कथञ्चित् तत्प्राप्तिसम्भावनायामपि कथमहं विद्याधरः सन् मनुषीसङ्गं कृत्वा विद्याधरवृन्दवृन्दारकमध्ये निवत्स्यामीत्युभयतः चिन्तासूत्रसन्दानितः प्रज्ञप्तिसंज्ञिकां विद्यां दध्यौ, धृताकारतया च तया इत्थं निजगदे—'जगदेक-मात्रसौन्दर्यशोभास्तेना इयं कलिंगसेना, सुभग, कलिंगदत्ततनया; अनया रूपसम्पत्त्या तद्गृहमवतीर्णा तत्त्वतो न मनुषी प्रत्युत शापच्युता अप्सराः'। विद्यया एवमुक्तो विद्याधराधिपो निजभवनमासाद्य अन्यकार्यपराङ्मुखः अवाङ्मुख इव अवाङ्मुखस्तिष्ठन् अनङ्गशरशीर्णोऽचिन्तयत् यत् स्त्रीणां हठोपभोगः मृत्युदः शापः, अतः हठात् एतस्याः अपहरणम् असाम्प्रतम् इत्यस्याः अवाप्तये प्रणतप्रियकरं भगवन्तं हरं प्रसादयामि। एतन्निश्चित्य अन्येद्युः ऋषभपर्वतमासाद्य एकाङ्घ्रिकनिष्ठया भुवं स्पृशन् परित्यक्ताहारः तपस्यन् प्रणतिपर्यस्तमस्तकः सतीपतिस्तुतिमकरोत्। तत्तीव्रतपश्चर्यया च अचिरात् सन्तुष्टः शङ्करः दत्तदर्शनः तमादिदेश—'एषा कलिंगसेना स्व-सौन्दर्यसम्पदाभूतलविश्रुतस्वरूपा। अस्या तुल्या न काचित् अन्या कन्या।

नापि चास्याः सदृशः कश्चिदन्यो भर्त्ता ऋते केवलमेकं वत्सेशम् । सोऽपि च यद्यप्येनामभिवाञ्छति तथापि वासवदत्ताभीत्या न स स्फुटं स्वकीयामीहामभिव्यनक्ति । रूपलुब्धा एषा अपि सोमप्रभामुखात् तमाकर्ण्य स्वयं विवरिषति इति यावदस्याः विवाहो न भवति तावदन्तरैव धृतवत्सेशस्वरूपः त्वं गान्धर्वेण विधिना एनां निजभार्यां कुर्याः । इत्थं सा सुन्दरी त्वदीया भार्या भवितुं सम्भवति'। शर्वेण इत्थमादिष्टो मदनवेगः क्षितितलमिलन्मौलिमण्डलः पार्वतीपतिं प्रणिपत्य कालकूटगिरितटावस्थितं निजभवनं जगाम ।

69. अत्रान्तरे व्योमवाहिना यान्त्रिकयानेन प्रतिप्रभातं तक्षशिलानगरीं समायान्त्या प्रतिसायं च तेनैव मार्गेण निजावासं प्रतिनिवर्तयन्त्या सोमप्रभया सह क्रीडन्ती कलिंगसेना एकदा निर्मक्षिकस्थाने निजसखीमित्थमुवाच—'सखि, मदीयो विवाहः सम्प्राप्तः । तद्विषये बहुभिर्नृपतिभिः प्रेषितेषु दूतेषु श्रावस्तीश्वरस्य प्रसेनजितो भूपतेः दूतः मम पित्रा सत्कृतः इति जाने अम्बाम्बालिकादिकुलोत्पन्नेन प्रसेनजिता सह ममोपयमो भविता । श्रुतैतद्वृत्तान्ता सोमप्रभा सातिशयदुःखमुवाच—'सखि, प्रसेनजित् राजा तु मया दृष्टः । स च अतिप्रवयाः पुत्रवांश्चेति । तेन सह युवत्यास्ते संयोगो हिमशुभ्रेण हेमन्तेन पद्मिन्याः संयोग इव भविष्यतीति मे विषादः । हर्षस्तु तदैव मे भवेत् यदा वत्सेश्वरेण उदयनेन सह विवाहस्ते संजायेत । यतो हि लावण्येन कुलेन शौर्येण सौन्दर्यसम्पत्या च अन्यो न कश्चित् भूपतिः तत्तुलामधिरोहतीति तेन योजितायामेव त्वयि विधातुर्लावण्यनिर्माणयत्नसाफल्यम्' इति ।

70. सोमप्रभाया एतद्वाक्यमाकर्ण्य वत्सेश्वरोत्का[1] कलिङ्गसेना तद्विषयकं सर्वं ज्ञातुमाचकाङ्क्षेति सोमप्रभा तद्वयोवंशादिकं सर्वमुक्तवती । तत्सर्वं श्रुत्वा कलिंगसेना सर्वज्ञाम् अतिप्रवीणां च तत्कर्मालङ्कर्मीणां सोमप्रभां सविनयं तत्कार्यसाहाय्यमयाचत । सापि च दैवायत्तम्

१. 'उत्क उन्मनाः' ।

एतत्कार्यम्' इति निगद्य सद्यो वत्सेशसङ्गमसमुत्सुकमनसं कलिंगसेनां कथञ्चिद् विहाय निजगृहाय निर्जगाम ।

70. अथान्येद्युः प्रातः समायातां स्वसखीं सोमप्रभां कलिंगसेनोवाच—'सखि, मदीयस्तातः प्रसेनजिते राज्ञे मां दास्यतीत्यश्वातो मया श्रुतम् । स च वृद्धः, त्वया दृष्टपूर्वः । वत्सेशश्च यथा अतिमानवरूपस्तथा त्वयैव प्रतिपादितः इति श्रुतिमार्गेण मदीयहृदयं प्रविष्टस्य वत्सेशस्य समीपे प्रसेनजित्प्रदर्शनपूर्वकं मां नेतुम् अचिरस्य प्रयस्य ।

72. प्रियसख्या एवमुक्ता सोमप्रभा आहितसकलपरिकरां सकोशां सपरिच्छदां च कलिंगसेनां मायाक्लृप्तयन्त्रविमानके समारोह्य तत्पित्रोरविदिता कृतप्रास्थानिका श्रावस्तीमवाप्य मृगयार्थं निर्गतं जरापाण्डुं प्रसेनजितं दूरतो दर्शयामास । तं तथा जराविष्टमालोक्य समुपजाततद्वरणोपेक्षा कलिंगसेना सोमप्रभामुवाच—'मामचिरमितो वत्सेशं प्रति नय' इति । अतस्तेनैव व्योमवाहिना वाहनेन ते उभे कौशाम्बीमवापतुः । तत्र चोद्यानगतं सख्युदीरितं वत्सेशं दूरादालोक्य कलिंगसेना तत्संगमं विना क्षणमपि स्थातुमपारयन्ती, 'सखि, अद्यैव मां वत्सराजं संगमयेति सोमप्रभामुवाच । किन्तु तदानीं[1] समुपलक्षितकिञ्चिदशुभनिमित्ता सा दूरं तद्गतागतं प्रतिषिध्य एतद्दिनम् अलक्षितया त्वया अस्मिन्नेवोद्याने अतिवाहनीयं प्रातश्चागत्य अहं तत्सङ्गमयुक्तिं संघटयिष्ये इति कलिंगसेनामुक्त्वा निजभर्तृगृहमयासीत् ।

73. गतायां च सोमप्रभायां शकुनज्ञया स्वसख्या निषिद्धा अपि तत्रस्था कलिंगसेना वत्सेशसङ्गमाय स्वकीयामुत्कटेच्छां प्रकटयन्ती यथातत्त्वं स्वसन्देशं निजमहत्तरमुखेन वत्सेशं व्यजिज्ञपत् यत् तक्षशिलापतेः पुत्री कलिंगसेना त्वद्रूपाकृष्टा परित्यक्तनिजबान्धवजना सपरिजना गुप्तचारिण्या मयासुरसुतया नलकूबरजायया सोमप्रभाख्यया निजसख्या व्योमगामिना वाहनेन इह समानीता; तां त्वं स्वीकुरुष्वेति । महत्तरादेतत्सर्वमाकर्ण्य अभिनन्दिततद्वचनो वत्सेशोऽतिहृष्टो वस्त्रालङ्काराद्यैः तं

---

१. 'दानीं च' ।

सत्कृत्य अमात्यमुख्यं यौगन्धरायणं चाहूय तं विदिताखिलवृत्तान्तं कृत्वा कर्हि[1] सा शीघ्रातिशीघ्रं परिणेयेति तदभिमतं जिज्ञासितवान्। वत्सेशेन इत्थं[2] जिज्ञासितो मंत्रिमुख्यः समालोचिततदात्वायतिहितापेक्षी क्षणमेव-मचिन्तयत् यत् जगत्त्रयविख्यातरूपां सुरैरपि स्पृह्यमाणां कलिंगसेनाम् अवाप्य वत्सेशः सर्वमन्यत् त्यक्ष्यतीति सम्भाविताशुवियुक्त्यां वासवदत्ता-याम् अवश्यंभाविनि नरवाहनदत्तीयविनाशे[3] दुष्करे च तत्स्नेहवर्द्धिते पद्मावतीजीवने व्यतिकरे चैतस्मिन् सम्भावितविनाशयोरनयोः पित्रोः सर्वस्वनाशः सम्पद्येत। निषिद्धस्य चास्य राज्ञः एतद्व्यसनमाधिक्य-माप्नुयात् इत्यस्य अनुप्रवेशस्य संसिद्ध्यै कालातिपात एव श्रेयान्। एतदा-लोच्य मन्त्री यौगन्धरायणो वत्सेशमुवाच, 'देव, धन्योऽसि यस्य ते समीप-मेवंभूता त्रिलोकसुन्दरी स्वयं वरणार्थमागता किन्तु इयं कन्या माहा-कुलीना[4] इति ज्योतिषिकान्[5] पृष्ट्वा सुलग्ने यथाविधि अस्याः पाणिग्रहणं विधेयम्। अद्य अस्याः स्वरूपानुरूपं वासो देयः।

74. मन्त्रिमुख्येनेत्थमुक्तो हृष्टहृदयो राजा सदभिमतमभिमतममनुतेति प्रदत्तदासावासादिका कलिंगसेना निजावासवेश्म प्रविश्य परां मुदमवाप। यौगन्धरायणोऽपि च राजकुलान्निर्गत्य अशुभस्य कार्यस्य प्रायः कालहार-मेव प्रतिक्रियां मन्वानः सर्वैस्तत्रत्यैः मौहूर्तिकैः सम्विदं विधाय सुदूर-लग्ननिर्देशाय तान् गुप्तं व्याजहार। कलिंगसेनासमाचारेण सपत्नीभिया अतिक्षुभितहृदयया वासवदत्तया पद्मावत्या चाकारितस्तदावासं गत्वा 'धीरे, मा वधीरयताम् धैर्यम्, न मयि प्राणति सम्भवत्येतत् इत्यलं चिन्तया। यथावसरं समीपागतं राजानं युवामात्मनो विकारं सम्वृत्य सविशेषोपचारैः उपचरताम् कलिंगसेनास्वीकारे चावाप्ततत्पितृसाहाय्यस्य राज्यस्य अपि वृद्धिं ब्रुवाणे युवां साम्प्रतं तस्याः स्वीकृतिमनुमन्येथाम्। एवं कृते युवयोर्विशालहृदयतामालोक्य विशेषेण प्रवृद्धयुष्मत्स्नेहो वत्सेशः स्वयमेव

---

१. 'अनद्यतने र्हिलन्यतरस्याम्'। २. 'इदमस्थमुः', 'एतेतौ रथोः'।
३. 'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या', 'वृद्धाच्छः'। ४. 'महाकुलादञ्खञौ'।
५. उक्थादिगणे ज्योतिषशब्दपाठात् 'क्रतूक्थादिसूत्रान्ताट्ठक्'।

कलिंगसेनामुद्वोढुं नोत्सहेत' एवं प्रबोधयन् मंत्री तदादृतः तदावासतो निज-भवनमाजगाम।

75. इत्थं पृथक् पृथक् निजनिजसद्मसु चिन्तासन्तानसन्दानितैः तैः व्यतियापितायां मायात्रियामायां प्रातरेव समीपमुपगत्य 'कलिंगसेनायाः देवस्य च विवाहमंगलाय कदा शुभावहो लग्नः? किं नाद्यैव मौहूर्तिकाः आकार्य पृच्छ्यन्ते?' इति मन्त्रिधूर्तेन यौगन्धरायणेन उक्तो वत्सेशः पुरोवर्तिनं प्रतीहारं तत्क्षणमेवादिश्य मौहूर्तिकान् आनाययामास किन्तु महामन्त्रिकृतपूर्वसम्विदो मौहूर्तिकाः तदानीं पृष्टाः षण्मासानन्तरमनुकूलं लग्नमाहुः। तदाकर्ण्य उद्विग्न इव यौगन्धरायणः 'अस्मिन् विषये कलिंगसेना प्रष्टव्या' इति राजानमुवाच। सोऽपि च 'तथास्तु' इत्युक्त्वा गणकैः सह कलिंगसेनान्तिकमासाद्य तां जगाद यत् 'त्वदीयविवाहलग्नं निश्चेतुमहमिहायातः इति निजजन्मर्क्षमाचक्ष्व'। एतच्छ्रुत्वा तत्परिजनेन तस्याः जन्मनक्षत्रमुदितं किन्तु मंत्रिकृतसम्विदो गणकः तत्रापि मासषट्कानन्तरमेव मुहूर्तं परिणयाय अभ्यधुः इत्युद्विग्नचेतसि कलिंगसेनायां तन्महत्तरकोऽब्रवीत् 'विवाहे लग्नानुकूल्यम् अत्यावश्यकम्। कुलग्ने हि कृत उपयम उपयमं नयति वरवध्वोरन्यतरम् इति शिवततिं मतिं दधानैर्भवद्भिः भवतिमङ्गलोऽनुकूल एव लग्नः शोधनीयः येन दम्पती चिरमजस्रं च ससुखं निवसेताम्'। एतदाकर्ण्य साधु! साधु!! इति ब्रुवाणेषु तत्रत्येषु सर्वेषु 'आम् कुलग्ने कृते विवाहे सम्बन्धी कलिंगदत्तोऽपि खिद्येत्' इत्युक्तवति च यौगन्धरायणे 'यच्च भवतामभिमतम्' इत्युक्त्वा विरतवचनायां च कलिंगसेनायां तस्यास्तदेव वचनं गृहीत्वा आमन्त्र्य च तां सगणको यौगन्धरायणो राजप्रासादमाससाद। तत्र च सर्वं वत्सेशमावेद्य युक्त्या च तं प्रबोध्य निजनिशान्तमायात्। तत्र एकान्ते स्थित्वा स्वाभीष्टसिद्धये सिद्धकालातिपातो मंत्री अवशिष्टकार्यपूर्तये योगेश्वराख्यं निजसुहृदं ब्रह्मराक्षसं सस्मार। स च स्मरणमात्रेणैव उपस्थितः, 'किमर्थं मन्त्रिन्, स्मृतोऽहम्' इति ब्रुवन् यौगन्धरायणेन आमूलं कलिंगसेनावृत्तान्तं स्वाभीष्टं चोक्तो भूयोऽवाचि— 'अस्याः सदृशी अन्या नारी इन्द्रपुरेऽपि नास्ति इति सिद्धविद्याधरादयोऽपि प्रच्छन्नरूपेण एनामिच्छन्ति। अतः केनापि सिद्धेन विद्याधरेण वा संगमञ्चेत्सा व्रजेत् त्वं चावलोकयेः तदा तद्दोषे त्वद्दृष्टितोऽस्माभिर्विलोक्य-

माने तथोक्ते च भूपतौ ततो विरक्तौ नितरामस्माकं कार्यसिद्धिः संजायेत'। मन्त्रिणा एवमादिष्टो ब्रह्मराक्षसः कलिंगसेनासदनमासाद्य तत्र प्रच्छन्नः तस्थौ।

76. अत्रान्तरे एव कलिंगसेनासखी सोमप्रभा तत्पार्श्वमागता निजसखी कार्यविघ्नशङ्किता हारायिताश्रुधारा तस्मिन् ब्रह्मराक्षसे शृण्वति एव इदमाह—'अद्य पूर्वाह्ण एव अहमिहायाता त्वदासन्नं छन्नमासन्ना सर्वं युष्मदालापमाकर्णितवतीत्यव्यपोढानिमित्तकार्यस्य सर्वदा अनिष्टकल्पकत्वात् मन्निषिद्धयापि वत्सेशसमीपम् आत्मग्रहाय ह्यः अशुभे निमित्ते दूतं प्रेषयन्त्या त्वया न समीचीनमाचरितम्। एवं हि रभसात् प्रवर्तमानानां कार्येषूपस्थितम् अनिमित्तं, सिद्धिविलम्बाद्यनिष्टमुत्पादयतीति प्राज्ञवाक्यावमानिनोऽनुशयदावदहनदग्धाः मुग्धाः शत्रूपहासास्पदतामायान्ति। तत्प्रार्थये सर्वविधातारं तवाविघ्नविवाहार्थम्। यतो हि नीतिनिपुणो मंत्री यौगन्धरायणोऽपि राजव्यसनाशङ्कितः एतत्कार्यं विहन्तुं चिन्तयेत्। यथाकथञ्चिद् विहितेऽपि विवाहे धार्मिको वत्सेशः विघ्नं मा समुत्पादयतु परं सपत्न्यस्तु सर्वथैव चिन्त्या भवन्ति। तास्तु मिथ्यैव बहुदोषान् आरोपयन्ति। त्वं कन्या असि, देवा अपि त्वामभिलषन्तीति तवायं प्रकर्षः एव कथंचित्कार्योन्माथी न सम्पद्येत। त्वं हि स्वाभिलषितपतिमन्दिरे स्थितासीत्यतः परमहं भर्त्रा निवारिता नात्रागमिष्यामि, त्वदतिस्नेहवशात्। मुगुप्तमिहागमनमपि अश्रेयस्करम् अकिञ्चित्करं चेत्यधुना निजगृहमहं गच्छामि। कलिंगसेनया सह एवं कृतालापा सोमप्रभा निजभवनं जगाम। यातायाञ्च प्रियसख्यां परित्यक्तनिजदेशबान्धवा विलम्बितवत्सेशपाणिग्रहणमहोत्सवा कलिंगसेना यूथपरिभ्रष्टसारङ्गाङ्गनाभङ्गीमङ्गीकुर्वाणा कथंचित् कञ्चित् कालमनैषीत्।

77. इतो वत्सेशोऽपि तदवाप्त्यौत्सुक्यविमनाः एकस्मिन् दिने मनोविनोदयितुं वासवदत्ताप्रासादमाससाद। तत्र च पूर्वत एव सुचतुरमन्त्रिवरशिक्षिता सा विशेषतस्तदानीं निर्विकारा विविधोपचारै र्निजप्रेमपर्यां परिचर्यां प्रादर्शयत्। तदा तस्याः हृदयं जिज्ञासुना नृपतिना, 'कलिंगराजसुता सुतारनयननिर्जितेन्दीवरा, वरार्थिनी मम, स्वयमिहोपयाता तत्त्वया ज्ञातं नवेति उक्ता वासवदत्ता 'मया सर्वं ज्ञातम्। हर्षस्यायं

महीयसो विषयः। सा ह्यस्माकं गृहमायाता साक्षाल्लक्ष्मीः। एतदुपधिना-ऽधिनाथे तत्पितर्यपि त्वद्वशगे निखिलापि इयमिला त्वद्वशवर्तिनी भवेत्। अहं तु तव विभूत्या सुखेनैव च सुखिनीति' तमुवाच।

78. वासवदत्तया इत्थमुक्तो वत्सेशोऽत्यन्तं सन्तुष्टः। कृततन्नि-शान्तनिशान्तः ततो निर्गतः पद्मावत्यावासमागतवान्। सापि च वासव-दत्तानुसारमेव तं परिचरन्ती पृष्टा च कलिंगसेनाविषये तथैवावदत् इत्यन्येद्युः तयोः सान्मनस्यं वत्सेशो यौगन्धरायणं शशंस। स चापि राजानं विचारनिमग्नमीक्षमाणः समुवाच—'देव, पुरन्ध्र्यो हि स्थापयन्ति प्रत्युरसं[1] निजपतीनां कृते अनश्लीलं शीलम्, अनाहार्यम् औदार्यम्; उपबृंहयन्ति प्रेम, प्रकाशयन्ति च प्रियंवदताम्। किन्त्वन्यासक्तेषु उप-रतेषु वा तेषु ता एव अदैन्यगाम्भीर्यहृदयभावास्तद्वियोगकरपत्रधाराकर्तन दुःसहदुःखदूनमनसो न शोभनतरमात्मनीनं जीवनमाकलयन्त्यः आत्म-तनूनाम् अतनूष्मतनूनपातमेव शरणाश्रयणाय श्रेयस्करं यशस्यं स्वर्ग्यं[2] चावगच्छन्ति। अतो राजन्, प्रकृष्टस्य प्रेम्णो भङ्गो, विशेषेण मनस्विन्याः, वासवदत्तायाः, सुदुःसह इति भवता परिणीतायां कलिंगसेनायां निःसंशयं सा स्वासून् अवसाययेत्। देवी पद्मावती अपि तथैव सम्भाव्यते। तयोश्च तथाभूतां गतिं गतयोः तन्मात्रकजीवितस्य नरवाहनदत्तस्य को भवेत् आश्रयः इति जानेऽहमेनाम् अल्पस्य कृते बहुहानिं प्रियाकान्तो[3] भवान् न सोढुं शक्नुयात्। देव्योरुक्तिगाम्भीर्यं हि तयोः जीवितत्यागगाढ निश्चयनिस्पृहहृदयताम् अभिव्यनक्तीत्येकपदे एव सम्भावितस्य सर्वविना-शस्य स्वार्थस्य रक्षा भवादृक्षैरसदृक्षैरवश्यं करणीया।

79. मन्त्रिवरादेवमाकर्ण्य सम्यग्विवेकपदवीमारूढो वत्सेशः सति-मन्मन्त्रिमुख्यसम्मतिमतिशयेन स्तुवन् कलिंगसेनापरिणये औदासीन्यम-भजत्। अत्रान्तरे कलिंगसेनावृत्तान्तमवगन्तुं नियुक्तो ब्रह्मराक्षसो योगेश्वरः तस्यामेव निशायाम् आगत्य मन्त्रिवरम् अवोचत्—'कलिंगसेनासदने सदा

---

१. 'प्रतेरुरसः सप्तमीस्थात्'। २. 'गोद्वयचोऽसंख्यापरिमाणाश्वादेर्यत्'।
३. कान्ताशब्दस्य प्रियादिषु पाठात् तस्मिन् प्रियाशब्दस्य न पुंवद्भावः।

सीदन्नहं बहिरन्तर्वा दिव्यानां मनुष्याणां वा प्रवेशं नापश्यम्। अद्य प्रच्छन्नः अहमकस्मात् नभसि सायमव्यतं शब्दं श्रुत्वा तं विज्ञातुमप्रभुर्भवन् कलिंगसेनालावण्यलुब्धस्य अम्बरे भ्रमतो दिव्यप्रभावस्य कस्यचिदप्ययेष शब्द इति निश्चित्य अहं तुभ्यमेतद्वक्तुमागतोऽस्मि यत् अतः परमह यथा-बुद्धि यथाशक्ति च कलिंगसेनागतिं ज्ञातुं प्रयतिष्ये। एतावदुक्त्वा योगेश्वरो ब्रह्मराक्षसो जगाम।

80. तदनन्तरं मदनवेगाख्यो विद्याधराधिपः पूर्वं कलिंगसेनामालोक्य पञ्चशरशरार्दितः तदवाप्तये कृततपश्चर्यावाप्तशङ्करवरः अपि अन्यासक्ताम् अन्यदेशस्थां च तामलभमानो रजनीषु दिवि भ्रमन् स्वावासस्य उपरि पर्यटन्तं वत्सेशं दृष्ट्वा दृष्ट्वा ताम्यन्तीं स्वहर्म्यगां कलिंगसेनामालोक्य तत्र अन्तरं लब्धुमेकस्यां रात्रौ धृतवत्सेशस्वरूपः मन्त्रिणां कालक्षेपम् असह-मानः स इव द्वारपालाभिवन्दितः कलिंगसेनाया आवासं प्रविश्य तां विश्वास्य च तेनैव रूपेण गान्धर्वेण विधिना स्वभार्यां चकार, तत्कालञ्च योगादलक्षितः प्रविष्टो योगेश्वरः सर्वमेतदाकलय्यातिपरितुष्टो हृष्टो यौगन्ध-रायणमागत्य यथादृष्टं निवेदितवान्। तेनातिप्रीतो यौगन्धरायणः प्रातः वत्सेशमागत्य अनुषङ्गतोऽब्रवीत्—'देव, परमस्वच्छन्दा एषा कलिंगसेना नार्हति भवत्पाणिस्पर्शम्। एषा स्वेच्छया प्रसेनजितमालोकयितुमायाता; जरापराहतलावण्यं च तं वीक्ष्य ततो विरक्ता रूपलुब्धा इह उपगता आवासे स्वेच्छया अन्यपुरुषासङ्गं करोति'। एतदाकर्ण्य कुलीना[1] इयं कन्या कथमि-त्थमाचरेत् मदीयान्तःपुरं प्रवेष्टुं को वा समर्थोभवेत् एवं संदिहानो राजा अद्यैव[2] महाराज, सर्वं त्वया प्रत्यक्षं कारयिष्यामि। मानुषाणां[3] न तत्र गतिर्भवेत् किन्तु तामव्याहतगतयो गन्धर्वादयोऽपि वाञ्छन्तीत्युक्तो मन्त्रिणा, रात्रौ सर्वेषु सुप्तेषु कलिंगसेनाया आवासमगच्छत्।

81. तत्र अदृष्टप्रवेशे त्रिदशसुन्दरीसौन्दर्यमुद्रां निद्रामप्यतिशय्य शय्या-गृहे कृतसम्वेशायाः तस्याः समीपे सुप्तं स्वस्वरूपस्थं साहसिकं[4] मदनवेगं

---

१. 'कुलात्खः'। २. 'सद्यः परुत्—इति प्रकरणे 'इदमोऽश् द्यश्च'। ३. मनोरपत्यमिति विग्रहे 'मनोर्जातावञ्यतौ षुक् च'। ४. 'ओजः सहो-ऽम्भसा वर्तते'।

जिघांसति वत्सेशे प्रवुद्धः स झाक् गगनमुदपतत्। कलिंगसेना अपि च प्रवुद्धा शून्यं शयनमालोक्य 'कथं पूर्वं प्रवुध्य वत्सेशो निद्रितां मामेवं हित्वा जिहीते' इत्युक्तवत्यास्तस्याः तद्वचनमाकर्ण्य यौगन्धरायणो वत्सेशमाह 'त्वद्रूपधारिणा अनेन दूषितचरित्रीकृता[1] इति समुपलब्धयोगबलोऽह त्वया साक्षादकारयम्। किन्तु दिव्य[2]प्रभावः अयं हन्तुमशक्यः। एवमुक्त्वा वत्सेशेन सह कलिंगसेनामागत्य यौगन्धरायणेन, 'राजकन्ये, त्वं वत्सेशरूपधारिणा केनापि मायाविना[3] सम्मोह्य परिणीतासि, नामुना मम स्वामिना' इत्युक्ता अतिसम्भ्रान्ता कुन्ताविद्धस्वान्ता इव कलिंगसेना दुरन्तां गतिं वैधीम्[4] आकलयमाना अश्रुपरिप्लुतनेत्रा वत्सेशमुवाच—गान्धर्वेण विधिना अत्र त्वया परिणीता अहं कथंकारमिह शकुन्तला दुष्यन्तेन इव विस्मये' ! हृदिस्पृशम् एतां वाचमाकर्ण्य तद्दोषोन्मेषणसङ्कुचितहृदयपुण्डरीकः, क्षणम् अवाङ्मुखस्थितो वत्सेशः, 'सत्यं न त्वं मया परिणीता असि; अद्यैव अहमिहायातः' इत्युक्त्वा मन्त्रिणा सह स्वमन्दिरमगात्।

82. एवं कृतकृत्ये इव ततो निर्गत्य गते सवत्सेशे यौगन्धरायणे गजनिपीडिता पद्मिनी इव उद्वेगविगलत्पत्रमुखाब्जा परिक्षिप्तकवरीभ्रमरीका कलिंगसेना विनष्टकन्यकाभावा, अभावादन्यरक्षोपायस्य अन्तरिक्षनिक्षिप्तचक्षुः 'वत्सेशरूपिणा येन अहं परिणीता स प्रकाशताम्; स एव हि मदीयः[5]पतिः' इति दिविस्पृशं[6] वाचं व्याजहार। एवमुक्तवत्यां च तस्यां दिव्यरूपो हारकेयूरराजितो विद्याधराधिपो गगनादवतीर्णः 'को भवान् इति तया पृष्टः 'अहं तन्वि, मदनवेगाख्यो विद्याधराधिपः त्वां पुरा पितृगृहस्थामवलोक्य त्वत्प्राप्तये कृततपाः शिवाद् वरमवाप्य अहार्यधैर्यैः त्वां मार्गयमाणः वत्सेश्वरानुरक्तां त्वामिहासाद्य अवृत्ततद्विवाहामेव युक्त्या पर्यणयम्' । एवं तद्वाग्लताललितस्वरपल्लवतल्लजं निजकर्णमारोपयन्ती, समुत्पन्नानल्पालाप-

१. 'अभूततद्भावे च्विः' 'अस्य च्वौ' । २. 'द्युप्रागपागुदक्प्रतीचो यत्' । ३. अस्मायामेधास्रजो विनिः' । ४. विधेरियम् 'तस्येदम्' इत्यणि 'टिड्ढाणञ्'—इति ङीप् । ५. 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति खञभावे छः, ततः 'प्रत्ययोत्तरपदयोश्च' इत्यस्मदो मदादेशः । ६. 'हृद्युभ्यां च' ।

प्रीतिः, तत्रैव पुनरागमनाय प्रतिज्ञाय द्याम् उत्पतता मदनवेगेन आश्वासिता हृदये[1] बन्धसद्धत्तृभक्तिः कलिंगसेना आलानबद्धा स्तम्बेरमा[2] इव तस्मिन्नेव आवासे वस्तुं स्वान्तं स्थिरीचकार ।

**83.** एकदा तु कलिंगसेनासौन्दर्यस्मृतिसमुद्भूतमन्मथावेगास्वस्थः वत्सेशो निशायाम् समुत्थाय खड्गपाणिः[3] अस्याः आवासम्प्राविशत्, अनुनाथितवांश्च तत्र तत्कृतातिथ्यः[4] तां भार्यार्थम् । किन्तु परपत्नी अहमिति तया प्रत्याख्यातो भणितः यत् परकलत्ररतिः सद्गोत्रजानाम् अपत्रपताम् अभिव्यनक्ति । त्वदर्थमहम् इह याता अपि त्वद्रूपधारिणा मदनवेगाख्येन विद्याधराधिपेन विवाहिता इति स एव मदीयो भर्त्ता । नाहं वेश्यायाः पुत्री पुँश्चली वेति । अस्मिन् विषये अहं न मनसा आज्ञायिनी । दृष्टाशकुनया च स्वसख्या निषिद्धा अपि अहं त्वत्पार्श्वे प्रैष्यप्रेषणरूपम् यत् अचर्यम् अचरमम् अपराधमाचरम् तेन त्वं माम् अन्यथा मा मन्यथाः । बलात्कारेण चाभिकाम्यमाना अहम् इहैव अपरिप्लुतचरित्रा एव प्राणान् जह्याम् । अहमिदानीं त्वदाश्रितेत्याश्रिताया मे अत्र निवसनेऽपि विप्रतिपत्तिश्चेद् अहमन्यतो गच्छेयम्' । एतदाकर्ण्य धर्मज्ञो वत्सेशः समुत्पन्नविवेकातिरेको भर्त्रा सह निर्भयं तत्र निवस्तुं तामनुमत्य स्वप्रासादमाजगाम । तत्सर्वम् आकाशे अलक्षितो मदनवेगः समालक्ष्य परां मुदमासाद्य सद्यस्ततोऽवतीर्णः साधुवादेन स्वप्रियां सत्कृत्य च तस्यां निशायां तत्रैव न्युष्य उषसि दिवमुत्पपात ।

**84.** एवम् आगच्छता गच्छता च गविष्ठिरेण विद्याधरेण रममाणा कलिंगसेना मर्त्यभावेऽपि दिविजान्[5] भोगान् भुञ्जाना सुखान्विता तम् आवासम् अध्यवसत् । उदयनोऽपि च मुक्तचिन्तो मन्त्रिवचः स्मरन् राज्यं पुत्रं च लब्धं मन्वानो नितरामाननन्द ।

---

१. 'बन्धे च विभाषा' । २. 'तत्पुरुषे कृति बहुलम्' । ३. 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' । ४. 'अतिथेर्ञ्यः' । ५. 'प्रावृट्शरत्कालदिवां जे' ।

85. अथ गच्छत्सु दिवसेषु आपन्नसत्त्वां कलिङ्गसेनामुपेत्य एकदा मदनवेग उवाच 'कलिंगसेने, पूर्वस्मिन् जन्मनि अप्सरास्त्वम् स्वकीयेन अविनयेन शक्रश पतः साम्प्रतं मानुषयोनिमवाप्ता। दिव्यानामस्माकञ्च एष समयः यत् मनुष्यगर्भजातम् अपत्यम् इहैव परित्यज्य वयमविदूरतो यामः इत्यपत्यमेतत् त्वम् अभिरक्षेः अहं च निजस्थानं गतोऽपि तव स्मरणक्षणे एव सन्निधास्ये'। एवमुक्त्वा अश्रुपरिप्लुतनेत्रां तां समाश्वास्य अपरिमितं रत्नराशिं च तस्यै दत्त्वा समयाकृष्टो विद्याधरो निजवसतिम् उदपतत्। कलिङ्गसेना च वत्सेशभुजच्छायायाम् अवलम्बितपत्याशासूत्रा अमुत्राजस्रसंयोगाय व्रतमिवाचरन्ती तत्रैव दिनानि व्यत्यगमयत्।

*मदनमञ्चुकोत्पत्तिः*

86. अत्रान्तरे सङ्कल्पत्यवाप्त्यै तपः कृतवतीम्, अमर्त्यलोके निजाराधनतः जनिष्यमाणाम् अयोनिजामनङ्गभार्यां रतिम् अम्बिकापतिः दग्धपूर्वेण, वत्सराजगृहे कालेजेन तत्पतिना, संयोक्तुम् आदिदेश। अतो दग्धकामोऽपि निजोक्तिं पूरयितुकामः सतीवामः एतत्कार्यसिद्धये प्रजापतिमुवाच यत् कलिंगसेना दिव्यसम्भवं तनयं सोष्यतेः तं मायया अपहृत्य तत्स्थले त्यक्तदिव्यतनुम् इमां रतिम् मानुषीं कन्यां निर्माय क्षिप। इमामाज्ञाम् शिरसि निधाय निर्गते विधातरि यथासमयं कलिंगसेनाप्रसूतं पुत्रं निजमायया अपहृत्य अलक्षितः सन् कन्यारूपिणीं रतिं तत्र न्यदधादिति सर्वे एव जनाः जातामेव जातां ताम् अलक्षन्त। कलिंगसेना अपि तां समुत्पन्नां कन्याम् असदृशीमवलोक्य समवाप्तपुत्रजननाधिकसन्तोषा तोषानुरूपम् उत्सवं वितन्वती 'मदनमञ्चुका' इति नाम्ना ताम् आजुहाव। नृपोऽपि चाथ वत्सेश्वरः सदेवीकः समन्त्रिवर्गः जातां तादृशीम् अनुपमां कन्यां समाकर्ण्य अकस्माद् विधिप्रेरितो यौगन्धरायणे शृण्वति वासवदत्ताम् उवाच—'जाने, कलिंगसेना एषा शापवशेन मर्त्यत्वमवाप्ता। दिव्या स्त्रीति निजालौकिकरूपेण दर्शकानन्ददायिनी। ऐतदायनी[1] अपि काचिद्दिव्यैव इत्यसौ मम तनयस्य नर-

---

१. एतस्या अपत्यम् इति विग्रहे 'त्यदादीनां फिञ् वा वाच्यः,' ततः अपत्यवाचकप्रत्ययस्यापि गोत्रत्वात् जातिलक्षणा ङीष्।

वाहनदत्तस्य रूपेण तुल्या शीलसौन्दर्यस्नेहसुधाकुल्या इव कुल्या[1] महादेवी पदार्हा'। एतदाकर्ण्य देवी वासवदत्ता उवाच—'महाराज, कस्मादकस्मा-दद्य चेतस्यास्पदमकरोत् इयं भावना भवतः? क्व उभयकुलविशुद्धः सौभागिनेयः[2] एष ते पुत्रः क्वासौ बान्धकिनेयी[3] कालिङ्गसेनेयी[4]? श्रुतैत-द्वचनो वत्सेशो विमृशन् वासवदत्तामुवाच, 'नाहम् आत्मना एतद् ब्रवीमि अपि तु केनापि देवेन हृदिस्थितेन प्रेरितस्य मम मुखाद् इमा वाचः निस्स-रन्ति। इयं कन्या नरवाहनदत्तस्य भूतपूर्वभार्या। किञ्च, असौ एकपत्नी कलिंगसेना कुलीनाऽपि कुलीना[5]। पूर्वकर्मवशात् आनुपीत्वं गता इत्य-शरीरिणीं वाचमिबाहं शृणोमि'। इत्थमुक्त्वा विरतवचसि भूपतौ मन्त्री यौगन्धरायणः प्राह—'देव, श्रूयते, निजधवे भवेन भूतिभूयं प्रापिते रत्या तपश्चर्यया प्रसादितः शर्वो मर्त्यभावमागतायाः तस्याः मर्त्यलोकावतीर्णेन सशरीरेण तद्भर्त्रा सह सङ्गमाय वरमदात्। तव सुतश्च कामांशावतार इति दिव्यया वाचा पूर्वमेवोक्तम्। हराज्ञया च रत्या मर्त्यभावे अवतरणीयमेवेति कलिंगसेनागर्भग्राहिका अद्यागत्य मामेवमभाषत यत्कलिंगसेनागर्भेश यायां योऽर्भको मया दृष्टः तदन्योऽयं मां प्रतिभाति इत्येतदाश्चर्यजनकव्यतिरेकेण जाने, देवैः निजमायया कलिङ्गसेनागर्भचौर्येण निर्मिता एषा अयोनिजा रतिः, इति कामावतारस्य त्वत्पुत्रस्य दयिता भाविनी भार्या कलिंगसेना-तनया।' मन्त्रिणा एवमुक्तो वत्सेशो वासवदत्तया सह 'तथास्तु' इति कृत्वा तद्दिनमनैषीत्।

87. अथ गच्छत्सु दिवसेषु क्रमेण रूपसम्पदा वयसा च वर्द्धमानां कलिंगसेनातनयां मदनमञ्चुकामाकर्ण्य एकदा वासवदत्ता कौतुकात् ताम् निजान्तिकमानाययामास इति निजरूपोपहसितान्यवरयोषितं तामवलोक्य नूनमियं भुवमवतीर्णा रतिरेवेति तद्विषये स्वविचिकित्सा-मुत्सारितवती तथा जगन्नयनोत्सवं स्वकीयं सुतं चापि तत्र आनायित-वतीति बालौ अपि तौ सतीवरवरजवाक्पुपोषयिषया इव अन्योन्यावलो-कनेन सञ्जातातिहर्षौ दृष्टिपाशबद्धौ अपि ततः प्रभृति पृथक् स्थातुं न शेकतुः।

---

१. अपूर्वपदादन्यतरस्यां यड्ढकञौ।' २-३. 'कल्याण्यादीनामिनङ् च'।
४. 'स्त्रीभ्यो ढक्' ततः 'ढिड्ढाणञ्०'। ५. 'कुलात्खः'।

एतदवबुध्य कलिंगसेना सानन्दं नरवाहनदत्ते जामातृप्रीतिं बद्ध्वा धृतिम् आदधे ।

### नरवाहनदत्तस्य यौवराज्याभिषेकः

88. क्रमेण च एवमतिक्रामत्सु दिनेषु उदयनः मारमिव निजकुमारं कवचहरकल्पमालोक्य सम्मन्त्र्य मन्त्रिभिः स्वपुत्रार्थं स्वस्य इव पृथक् प्रासादं कारयित्वा श्लाघ्यगुणाग्रहाग्रहिलस्य तस्य यौवराज्याभिषेकोपकरणाहरणाय परिजनान् समान् समाहूय समादिदेश । अभ्यषिञ्चच्च तं यौवराज्ये, सम्भृतेषु सर्वसम्भारेषु देवदुन्दुभिनिर्ह्रादानन्दतूर्यनिर्घोषप्रतिशब्दं, माङ्गल्यमाल्यादिव्यपुष्पवर्षणपूर्वकम् अपरिमितम् आनन्दम् अभिव्यक्तीकुर्वत्सु च नगरेवासिषु । न्ययूयुजच्च तद्बाल्यसखान् स्वमन्त्रिपुत्रान् आहूय तत्सचिवत्वे । तथाहि यौगन्धरायणिं[1] मरुभूतिं तन्मन्त्रित्वे, रौमण्वतं[2] हरिशिखं सैनापत्ये[3], वासन्तकिं तपन्तकं क्रीडासखत्वे, ऐत्यकिं गोमुखं प्रतीहारत्वे इत्यादि । एवं भूभृता आज्ञप्तेषु तत्तस्थानीयपुत्रसहायकाधिकारिषु पुष्पवृष्टिपुरःसरी एषा दिव्या वाक् उदभूद् यत् सत्स्वप्येतेषु अस्य सर्वकार्यसाधकेषु, गोमुखः अस्य शरीरेण द्वितीयः आत्मनाऽभिन्नो भविष्यति इति । दिव्यया वाचा एवमुक्तो वत्सेशोऽतिहृष्टः सर्वान् वस्त्राभरणादिभिः सम्मान्य अनुजीविभ्यः दारिद्र्यदारि द्रविणं वितताार । एवं तौर्यत्रिकादिकपूर्वकं विहिताभिषेके नरवाहनदत्ते, 'पूज्यन्तां द्विजन्मानो देवताश्च, विमुच्यन्तां वन्दिनः कारागारेभ्यः, पक्षिणश्च पञ्जरेभ्यः' इत्यादि श्रूयमाणेषु परितः परिजनालापेषु, लास्योन्मादिनि मृदुमङ्गलोद्गारमुखरे सञ्चरितपुरपथेषु पौरनारीजने, स दिवसः सम्प्राप्तस्वर्गसुखस्य इव आस्वादितामृतरसस्य इव अनुभूतपरमानन्दस्य इव राज्ञः अतिचक्राम ।

89. अथ प्राप्तायां निशायां सुतोद्वाहविमर्शिन्या कलिङ्गसेनया स्मृतिमात्रैव निजपत्यभ्यनुज्ञाता आयाता सोमप्रभा चिरोत्कण्ठितां सखीं कण्ठेनालिंग्य कुशलमङ्गलप्रश्नपूर्वकं जगाद—'त्वं तावत् महर्द्धिना विद्या-

---

१. 'अत इञ्' । २. 'तस्यापत्यम्' । ३. 'पत्यन्तपुरोहितादिभ्यो यक्' ।

धराधिपेन परिणीता। तव सुता च स्मरहरवरानुग्रहादवतीर्णा साक्षाद्रतिः कामांशावतारस्य औदयनेः नरवाहनदत्तस्य भूतपूर्वभार्या या च आकल्पं विद्याधराधिराज्यं करिष्यतः तस्य अवरोधेषु मूर्द्धन्या भवित्री। त्वञ्च शक्रशापपरिच्युता अप्सराः सम्पादितावशिष्टकार्या अधिगतशापमुक्तिः आत्मपूर्वगतिं गमिष्यसीति ज्ञानवता मदीयेन भर्त्रा समाख्यातम्। अहञ्चेह त्वत्तनयाकृते त्रैलोक्याद्भुतमेकमुद्यानं निर्ममे'। एवमभिधाय निजकथनानुकूलं निजमायानिर्मितदिव्याद्भुतोद्याना अत्युत्कण्ठितां कलिंगसेनाम् आमन्त्र्य निजभवनम् अगमत्।

90. सोमप्रभायां यातायामथ प्रभातायाञ्च रजन्यां विविधोत्फुल्लप्रसव्यभव्यतरुणतरतरुरामणीयकमन्दीकृतनन्दनवनवैभवम् उद्यानमवलोक्य सञ्जातातिविस्मयात् लोकात् वत्सेश्वरः समाकर्ण्य सपरिवारः ससचिवश्च तत्राजगाम। पप्रच्छ च आतिथ्यव्यग्रां कलिंगसेनाम् उद्यानविषयकं वृत्तम्। सा चापि विश्वकर्मावतारमयासुरसुतायाः संस्तवं दत्त्वा तया रात्रौ इहागत्य एतदुद्यानं कृतमिति ब्रुवाणा तं विदिताखिलसोमप्रभासंवादमकरोत्। तत्सर्वमाकर्ण्य अनुभूतातुलमुत् समुत्सारितसर्वविचिकित्सः सभार्यापुत्रपरिजनादिः वत्सेशः स्वीकृतकलिंगसेनाकृतातिथ्यो निजमन्दिरमगच्छत्।

91. एवमतिक्रामत्सु दिवसेषु नरवाहनदत्तः अवाप्ताखिलातोद्यविद्यकलादिः दिवौकसानपि व्यस्मापयत्। इतो मदनमञ्जुकापि प्रतिकलम् अविकलेन्दुकलाभिरिवाविकलाभिः उपचितावयवा उद्यानवर्तिनि नृत्यसङ्गीतवेश्मनि नृत्यादिकलानां परं पारं जगाम। मध्ये मध्ये च नरवाहनदत्तः स्वयं तदुद्यानसङ्गीतवेश्मनि समागत्य नृत्यन्त्याञ्च प्रियायां सर्वातोद्यानि वादयन् दैशान्[1] विविधचारणगन्धर्वान् अन्यविद्याविशारदांश्च गजाश्वरथशस्त्रास्त्रचित्रपुस्तकादिकोविदान् ह्वेपयन् गायन्त्या नृत्यन्त्या च मदनमञ्जुकया अनुरज्यमानः स्वकान्त्या कौशलेन च तामनुरञ्जयन् दिवसाननैषीत्।

92. एकदा विलम्बकृतोत्कण्ठां प्रियाम् मदनमञ्जुकामवलोकयितुं

---

१. दिग्भ्यः आगतान्, 'तत आगतः'।

गोमुखादिभिः सह उद्यानं गतो नरवाहनदत्तः कलिंगसेनया अभिहितः 'चिरमनागते अत्रभवति अत्युत्सुका मदनमञ्चुका मदनुगता त्वत्पदवीमवलोकयितुं यावदेव हर्म्याग्रमारूढा तावदेव एकः किरीटी खड्गी दिव्याकृतिः पुमान् नभसोऽवतीर्य मामब्रवीत्—'अहं मानसवेगाख्यो विद्याधरेश्वरः। त्वञ्च भुवमवतीर्णा शापच्युता अप्सराः इति मत्सम्बन्धानुरूपां दिव्यामेतां स्वसुतां मह्यं देहि' इति। एतदाकर्ण्य विहस्य अहमब्रवम् यत् 'युष्माकं सर्वेषां भाविचक्रवर्ती वासवदत्तेयः अस्याः भर्त्ता देवैर्निर्दिष्टः' इति दुर्मनाः सः अन्तरिक्षमुदपतत्। एतन्निशम्य गोमुखोऽवदद् यत् 'जन्मकालादेव अन्तरिक्षोक्त्या इमम् अस्मत्स्वामिनं भाविनं विद्याधरपतिमवगत्य अधराशया विद्याधराः पापं कर्त्तुमुद्युक्ताः किन्त्वयं शाम्भवै[1] र्गणैः सुरक्षितः इति ते न किमपि कर्त्तुं पारयन्ति'। एतदाकर्ण्य कलिंगसेना अब्रवीत् 'तर्हि मायया मदनमञ्चुकावञ्चनादर्वागेव राजपुत्रेण सह विवाहाय उद्योगः किं न क्रियते'? तच्छ्रुत्वा गोमुखादयः उक्तवन्तः यत् एतदर्थं तर्हि वत्सेशः प्रार्थ्यताम्'। एतदाकर्ण्य अन्येद्युः कलिंगसेना स्वयं स्वभवनस्थं वत्सेशं गत्वा तादायनिना[2] नरवाहनदत्तेन सह लोकलोचनलोभनीयायाः स्वसुतायाः उद्वाहरूपं निजाभीष्टं व्यजिज्ञपत्। स चापि तां विसृज्य सर्वान् निजमंत्रिणः समाहूय देव्या वासवदत्तायाः समक्षं कलिंगसेनाऽभीष्टमनुपज्य प्रसेनजितं त्यक्त्वा तत्रागतायाः मदनवेगेन च विवाहितायाः तस्याः स्वविषयकं 'बन्धकी' इति लोकप्रवादञ्च कथयन् तदभिमतमनुयुञ्जानोऽपि लोकानुरञ्जनार्थं देवानां प्रियैः[3] वाचो युक्त्या प्रसारितेन लोकप्रवादेन जानकीपरित्यक्तारं रामम् उदाहृतवान्, स्वाभिप्रायञ्च एवमभिव्यक्तवान् यद् गान्धर्वेण विधिना यदि नरवाहनदत्तो रूपवस्वधिकामपि असवधिकां कालिङ्गसेनेयीम् उद्वहतु, कथं तद्भवेदिति। एतदाकर्ण्य यौगन्धरायण उक्तवान् यद् देव, नैषा साधारणी[4] कन्या अपि तु दिव्या एवा इति ज्ञानिना ब्रह्मराक्षसेन असकृत् माम् अभ्यधायि'। एवं पारस्परिकालापं कुर्वत्स्वेव तेषु दिवः

---

१. 'तस्येदम्'। २. 'त्यदादीनां फिञ् वा वाच्यः'। ३. 'देवानां प्रिय इति च मूर्खे'। ४. साधारण-शब्दात् स्वार्थे ष्यञ् ततः षित्वात् ङीषि 'हलस्तद्धितस्य'।

समुद्भवन्ती माहेश्वरी वाणी त्र्यम्बकतृतीयचक्षुर्दग्धपञ्चशरांशावतारस्य नरवाहनदत्तस्य भार्यार्थं मयैव निर्मिता एषा रत्यवतारा मदनमञ्चुकेति सर्वान्तःपुरमुख्यया अनया युक्तः सः आकल्पं विद्याधराधिराज्यं करिष्यति' इत्युक्त्वा विरराम।

मदनमञ्चुकापरिणयः

93. तदाकर्ण्य कर्णयुगलसुधावर्षि सपरिजनो वत्सेशः सुतोद्वाहकृतस्थिरमतिः आकारितावगतचरतत्त्वसचिवमुख्यमौहूर्तिकः अयमयसमयमुहूर्तं स्थिरीकर्त्तुं समादिदेश। गणकाश्च शास्त्रदृष्ट्या सर्वमवलोक्य अचिरभाविनमेव शुभविवाहलग्नं निर्दिशन्तोऽपि तत्पुत्रस्य किञ्चित्कालिकभाविभार्यावियोगम् ऊचुः। ततः प्राप्ते विवाहदिवसे दिव्याङ्गनाविहितदिव्यमङ्गलकौतुकया मदनमञ्चुकया सह निजवैभवोचितं पुत्रविवाहविधिं निर्वर्त्य हराज्ञया असन्दानन्दमाविन्दन् वत्सेशः सकलसंसारसुखरसास्वादसुखितस्वान्तः सुचिराकाङ्क्षितजीवलोकसुखम् अनुभवन् पुत्रेण नरवाहनदत्तेन, स्नुषया च मदनमञ्चुकया सह, सपरिजनः दिवसान् व्यत्याययत्। अभ्युदयाकांक्षी युवराजो नरवाहनदत्तोऽपि च पितुरन्तेवासी सुखसुखेन कौशाम्बीम् अधिवसन् नवविवाहानन्दम् अन्वभवत् मदनमञ्चुका चापि मातृनिर्विशेषस्नेहयाः वासवदत्तायाः मातृष्वसृनिर्विशेषपद्मावत्याश्च हस्तच्छायामाश्रित्य विस्मृतनिजमातृस्नेहाऽनेहसंससुखं निनाय।

# कृदन्तनिर्देशात्मकः
# चतुर्थो विलासः

### *मदनमञ्चुकापहारः*

**94.** कामरूपेण स्पर्द्धमानः वत्सेश्वरसुतो नरवाहनदत्त एवं मदनमञ्चुकाविवाहानन्तरं स्वशौर्यवैभवबलेन समवाप्ताभिः दिष्टिदिष्टाभिश्च रत्नप्रभा-कर्पूरिका-अनङ्गरति-ललितलोचनाप्रभृतिभिः अन्याभिः दिव्यभार्याभिः सह परिक्रीडमानः पितृविभूतिभिः सम्पूर्णकामः सामोदप्रमोदं गोमुखादिभिः सह कौशाम्बीमधिवसन् स्वाभीष्टवधूसङ्गमनोरमान् तौर्यत्रिककलापादिरम्यान् दिवसान् व्यतियापयामास। अथ एकदा स ताम् अग्र्यां कान्तां मदनमञ्चुकां सपरिजनां निजावरोधस्य अन्तः अनालोकयन् उषसि रजनीविरहापगतकान्तिः निशाकान्त इव विवर्णतां गतः अचिन्तयत्—किं मदीयं चित्तं जिज्ञासमाना मम प्रिया क्वापि अन्तरदधात् आहोस्वित् कस्यचित् मम अपराधस्य लेशेन क्वापि कुपितेव अगमत्; केनचित् मायया अपहृता छन्नं वा कुत्रचित् स्थापिता ? इत्थम् अनेक संल्प-विकल्पपरम्परापरीतः किंकर्तव्यविमूढः अतिविह्वलः समजायत । तस्य तथाभूतां अनवलोकितव्यां[1] दशामवलोक्य तस्य पिता वत्सेश्वरः मातरो मन्त्रिणः भृत्याश्च अतिविकलतां गताः, निजसुतया विहीना कलिंगसेना चापि सममुहत् ।

**95.** अथ एका अन्तःपुररक्षिका, सर्वेषु आकर्णयत्सु नरवाहनदत्तस्याग्रे अब्रवीत् यत् हर्म्याग्रे वर्तमानां मदनमञ्चुकामवलोक्य नभसोऽवतीर्णः एको विद्याधरयुवा यश्च 'मानसवेग' इति स्वनामोक्त्या कलिङ्गसेनाम् अभ्युपगत्य एकदा, 'मत्सम्बन्धानुरूपा एषा सुता मह्यं दातव्या' एवं ताम-

---

१. 'तव्यत्तव्यानीयरः' ।

याचत, तदानीं च तया निषिद्धः, स एव यथागतं गत्वा शुप्रसिदानीमागत्य मायया किं न अपहरेत् ? यद्यपि दिव्याः परदारान् नैव कामयन्ते, तथापि रागान्धं जनं सदसद्विवेको रहयति इति सर्वं सम्भाव्यते। तदाकर्ण्य नरवाहनदत्तस्य विरहोत्प्लुतं चेतो वीचिविक्षोभितम् अम्बुजम् इवाजनि। तत्र रुमण्वान् अब्रवीत्, 'इयं पुरी परितः रक्षिता वर्तते अतः अत्र असंस्तुतस्य कस्यचिदपि प्रवेशनिर्गमौ न सरलौ। हरप्रसादाच्च अस्याः अन्येन अनिष्टेन न कथमपि सम्भवनीयम्[1] इति प्रणयकुपितया तया इहैव क्वचित् स्थितया भुत्रेलिमम्[2]। प्रणयकुपिता हि कामिन्यः प्रायः एवं कुर्वन्तीति बहुत्र प्रसिद्धं वर्तते। तथाहि पुरा अङ्गिरा नाम मुनिः अष्टावक्रस्य कन्यां सावित्रीं विवाहार्थम् आर्थयत किन्तु अन्यस्मै पूर्वसंकल्पितां स्वसुतां सगुणाय अपि अदानीयाय[3] तस्मै मुनये ताम् अदेयां मत्वा अष्टावक्रः प्रत्याख्यात्। अतः असौ मुनिः अश्रुता-नाम्नीं तस्य भ्रातुष्पुत्रीम् उपयम्य तया भार्यया सह सुखामास। अश्रुता च सावित्रीं तत्पूर्ववाञ्छितां जानाति स्म इत्येकदा यदा स मुनिः गायत्रीं जपन् मौनी अतिष्ठत् तदा 'सा आर्यपुत्र किमेवं चिरं चिन्त्यते' इति प्रणयेन तं मुनिम् अपरीपृच्छिष्ट। तदुत्तरे 'प्रिये, सावित्रीं ध्यायामि' इति सा उक्ता। तच्छ्रुत्वा अश्रुता आत्मनि ताम् अष्टावक्रसुतां सावित्रीम् आकलय्य अन्यासक्तचित्तेन पत्या सह तिष्ठन्त्याः मम जीवन-दुर्यापनेन अलम् इत्यधुनैव मया प्राणाः परित्यक्तव्याः इत्थं सञ्चिन्तयन्ती अतिनिर्विण्णा स्वप्राणान् परित्यक्तुं वनमगमत्। तत्र च भर्तुः शुभमनुध्याय कण्ठे पाशं पर्यास्थत किन्तु तदानीमेव साक्षसूत्रकमण्डलुः गायत्री साक्षाद् अविर्भूय 'पुत्रि इत्थं मा म्लेयम्[4]। तव पत्या अहं सावित्री (गायत्री) अनुध्याता न च अङ्गना' एवं तां समाश्वास्य विपाशयन्ती अतिरस्यत्। सा च मुनिपत्नी अन्विष्यता अङ्गिरसा वने समुपलब्धा। तदेवं स्त्रीणां प्रणयखण्डनं सर्वथा असह्यम्[5] इति स्वल्पेन अपि अपराधेन कुपिता सा क्वचिदिहैव स्थिता भवेत् अतः इहैव तामन्वेष्टुं यत्यम्[6]।

---

१. 'तव्यत्तव्यानीयरः'। २. 'केलिमर उपसंख्यानम्'। ३. 'कृत्यल्युटो बहुलम्'। ४. 'अचो यत्', 'ईद्यति'। ५. 'शकिसहोश्च'। ६. 'तकिशसियतिजनिभ्यो यद्वाच्यः'।

96. रुमण्वता इत्थम् उक्ते सति राज्ञा वत्सेश्वरेणोक्तम्, 'आम्, सम्भवत्येतत्। अन्यद् दुरितं तु तद्विषये न कथमपि संदिहेलिमम्। यतो हि मदनमञ्चुका कामांशस्य नरवाहनदत्तस्य प्रशस्ता भार्या, अवतारेण च रतिरिति नैषा पण्यस्त्रीव सर्वसाधारणवर्या। तया च सह अमुष्य नरवाहनदत्तस्य दिव्यं भोग्यं विद्याधरैश्वर्यम् अशरीरिणी वाग् निरदिशत् इति न कथमपि मृषोद्यया[1] तया प्रभवनीयम्, अतः सा अवश्यमिहैव क्वापि उपलभ्या भवित्रीति'।

97. राज्ञा स्वयमित्थमुदिते अपि तद्विरहविह्वलो नरवाहनदत्तः तदन्वेषणाय निर्जगाम। यथा यथा च मार्गयमाणः स तां न अवाप तथा तथा अधिकाधिकतमदह्यमानाङ्गः दग्धाङ्गः इव विभिन्नेषु देशेषु पीतमद्यः इव बभ्राम। सवसन्तकमरुभूतिहरिशिखगोमुखादिसचिवाः अपि सर्वस्थलेषु ताम् अन्विष्यन्तः पर्य्याटुः।

98. तत्पुरात् निर्गते च तस्मिन्, पिहितद्वारकाः तद्गृहाः अपि तद्विरहदुःखदर्शनोद्वेगनिमीलितनेत्राः इव प्रतिबभुः। वनेषु च मदनमञ्चुकां पृच्छन्तं तं चलत्पल्लवपाणयः तरवः 'अस्माभिः सा न दृष्टा' इति निर्गद्यं निवारयन्तः इव, उद्यानेषु उत्पतन्त पतत्त्रिणः विचिन्वते तस्मै 'न सा इतो गता' इति शंसन्तः इव प्रतीयिरे। अत्रान्तरे एव अनवद्य[2]विचेष्टिता वेगवतीनामविद्याधरी या च कदाचित् मदनमञ्चुकां दृष्टवती आसीत्, तदुदारवपुर्वेषेण नगरबाह्यवनान्तरे समुपागत्य एकाकिनीस्वैरम् एकस्य अशोकतरोः अधः तस्थौ। ताञ्च, विचिन्वानो भ्राम्यन् मरुभूतिः, सशल्यस्य कृते विशल्यकरणीम् इव अवलोक्य निजप्रियाव्यामोहपाशबद्धं मृगम् इव नरवाहदत्तम् उपगत्य उवाच, 'एकस्य अशोकतरोः अधः अधुना त्वदीया प्रिया मया समवलोकिता' इति। एवमुक्तेन तेन सह नरवाहनदत्तः तत्क्षणमेव तदुद्यानं हृष्टो गत्वा तृष्णक् अध्वगो मरौ वारिधारामिव तां विरहातिक्लान्तां स्वभार्यां मदनमञ्चुकां भृशमार्त्तो यावदेव आलिलिंगिषति तावत् समवाप्तकालम् अतिवर्तितुम् अक्षमा उपसर्या[3] धेनुरिव वृषस्यन्ती, सद्यः

१. 'राजसूयसूर्यमृषोद्य'०। २. 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु'।
३. 'उपसर्या काल्या प्रजने'।

परिणयैषिणी सा धूर्ता उवाच 'मां त्वं तावन्मा स्प्राक्षीः, एकं मे वचस्तावद् आकर्णय। अहं हि त्वदवाप्तेः प्राक् त्वत्प्राप्त्यर्थं यक्षान् प्रार्थयमाना विवाहसमये युष्मभ्यं स्वहस्तेन बलीन् प्रदास्यामि इति प्रतिज्ञाय अपि, तेभ्यः तान् दातुं विस्मृतवती इति तत्कोपेन यक्षैरपहृता, 'गच्छ पुनर्विवाहं कृत्वा प्रतिज्ञातं बलिं च अस्मभ्यं प्रदाय स्वपतिम् उपेयाः। अन्यथा ते शिवं न भवेत्' इत्थमुक्ता, तैः इह आनीय मुक्ता। तन्मामिदानीमाशु पुनः परिणयस्व, येन अहं यक्षेभ्यो बलिं दत्त्वा सत्यवद्यगीः[१] तव भामिनीभूयं[२] गता भूयोऽपि तवाभिलषितं सम्पादयेयम्, त्वया अपि च मदीयो नवोऽनृतोद्य दीनवो[३] मृज्यो[४] भवेत्'। एतत् तद् वाक्यं श्रुत्वा विरहकातरो नरवाहनदत्तः तत्क्षणमेव स्तुत्यम्[५] आदृत्यम्[६] शिष्यैः जुष्यं[७] च निजपुरोधसं शान्तिसोमं सम्भृत्यभृत्यैः समाहूय अपरिमितकुप्याकुप्यधामा क्षणाभ्यन्तर एव प्रयोजितनियोज्योपयमनसम्भृतसम्भारो गृध्यां[८] तां मायामदनमञ्चुकां वस्तुतस्तु वेगवतीं विद्याधरीमुपायत। सा च मद्यपिशितादिभिः स्वहस्तेन यक्षेभ्यो बलिं ददौ। नरवाहनदत्तश्चाथ वासभवनस्थो रुच्यया तया सह तत्कथनानुसारं मैरेयं पेयं पपौ। परिवर्तितरूपया च तया सह छायया सूर्य इव अव्यथ्यशक्तिः जीवलोकसुखमुपाभुङ्क्त।

99. एकदा अनया नरवाहनदत्तो रहसि निगदितो यत् 'सुप्ता अहं समुद्घाटितमुखी न 'कृत्यकार्ये[१०]णापि त्वया कदापि विलोकनीया'। एतदाकर्ण्य किमर्थम् अनया इत्थमुक्तम् इति सकौतुको राजपुत्रः तोषकोत्तरास्तरसुप्तायां तस्याम् अन्येद्युः यावत्तस्याः मुखमुद्घाट्य अलोकयति तावत् स्वापवेलावशेन अपगतमव्ययमायारूपा सा काचिदन्या एव, न पुष्यतारोद्दीप्तमुखी मदनमञ्चुका इत्युपलभ्य जाग्रदेव उपतिष्ठमानः प्रबुद्धां तां 'का त्वम् ? सत्यं सर्वं मे मुग्धे, त्वमभिधेहि' इति पप्रच्छ। समुपजातप्रतिभेदा सापि निजे रूपे वर्तमाना निर्निद्रोपविष्टं नरवाहनदत्तमेवं यथावस्तु वक्तुमुपचक्रमे—

---

१. 'वदः सुपि क्यप् च' इति यत्। २. 'भुवो भावे'। ३. 'वदः सुपि क्यप् च' इति क्यपि सम्प्रसारणम्। ४. 'मृजेर्विभाषा' इति क्यप्। ५.-७. 'एतिस्तुशास्वृदृजुषः क्यप्'। ८. 'ऋदुपधाच्चाक्लृपिचृतेः'। ९. 'विभाषा कृवृषोः' इति क्यपि 'ह्रस्वस्य पिति कृति तुक्'। १०. 'ऋहलोर्ण्यत्'।

100. प्रिय, अस्ति हिमगिरिसानौ आषाढपुरं नाम विद्याधरपुरम्। तत्र चाभवत् कुलपरम्परागतराज्यश्री-शकटियुग्यवर्यः अन्वमावास्यं स्वादिष्ठापाक्यफलसुसम्पादितपितृकार्यः पूयमानावश्यपाच्यदैवहव्यः, नगरनिस्सारितनिःशेषनिस्त्राप्यः, सकलसल्लोकलाप्यः, निजभुजोपार्जितकरप्रचेयोच्छ्रितफलसम्पत्तिनिर्जरराजर्य[1]सङ्गतिः, विद्याधराधिपो मानसवेगाख्यो राजा। वेगवतीनामा तस्याहं कनीयसी स्वसा। स च मदीयो भ्राता माम् अतिद्विषन्मतिरतिद्विषन् प्रगोपणीयां विद्यां दातुं नैच्छदिति मया महता क्लेशेन तपोवनाश्रितात् अर्च्यात् पितुः सकाशात् सर्वाधिकबलाः विद्याः प्राप्ताः। साहम् आषाढपुरीयोद्याने रक्षिभिराघृतां दीनां मदनमञ्चुकामवलोकितवती। सा च त्वदीया भार्या मदीयेन भ्रात्रा मायया अपहृता। सा हि साध्वी स्त्री अनिच्छन्ती च तेन पराभवितुम् अशक्या इति कुभ्रात्रा तेन तदनुनयने नियुक्ता अहमेकदा त्वत्प्रलापपरां प्रातस्तामगच्छम्। तत्प्रबोधनप्रसङ्गाच्च तया साध्व्या सह त्वन्नाम्नि अभ्युदीरिते सति मम मनः त्वदेकाग्रं सञ्जातमिति 'यन्नाम्नि श्रुते त्वं स्मरपरवशा भवेः स ते पतिः' इत्याद्यो देवीस्वप्नादेशो मया स्मृतः। अतः तत्स्मरणेन ताँ मदनमञ्चुकां धृतिं धारयित्वा तस्याः रूपेण त्वम् उपायतः उपयतः। तदेहि, यत्र ते प्रिया मदनमञ्चुका वर्तते तत्रैव तत्कृपाविष्टा त्वां नयामि। यतो हि आत्मनिरपेक्षा मदीया कापि त्वत्प्रेमवश्यता वर्तते अतः सपत्न्याः किङ्करत्वमपि मे अभिरोच्यम्। एतदाभाष्य स्वविद्याबलेन सा वेगवती तस्यामेव निशि प्रियावियोगानुभूयमानहृच्छोकम् ओककोकमिव नरवाहनदत्तमादाय खम् उदपप्तत्।

101. एवं चक्षुषामगोचरतां गतयोः तयोः तद्वृत्तमाकर्ण्य नरवाहनदत्तपरिवारोऽतितरां क्षोभम् अवाप। यौगन्धरायणादयो मन्त्रिणः अपि मरुभूतिप्रभृतिभिः सह व्यह्वलयन्। एतस्मिन्नेव अन्तरे प्रभावबद्धमण्डलो द्वितीयभास्कर इव मुनिर्नारदः आकाशात् अवतीर्य 'विद्याधर्या निजभवनं नीतस्ते पुत्रः शीघ्रमेव इह आगमिष्यति इति विज्ञाप्य धैर्यं धारयितुं भगवता शङ्करेण अहं तव समीपे प्रेषितः' इति वत्सेशं जगाद तथा स्वीकृतवत्सेशकृतसपर्यः यथावृत्तं वेगवतीचरितं कथयित्वा अन्तर्दधे।

---

१. 'अजर्यं संगतम्'।

102. ततः परे व्योमवाह्यवह्या[1] वेगवती व्योम्ना नरवाहनदत्तम् आषाढपुरं प्रापयति स्म । तच्चावगत्य तत्र मानसवेगः तौ वध्यौ[2] आकलयन् तयोः हत्याम्[3] अचिकीर्षत् । एतत्परिज्ञाय वेगवती नरवाहनदत्तं निजविद्याहस्ते न्यस्य मानसवेगेन सह विद्याबलोद्धतं युद्धं कृतवती; तस्मिँश्च निजविद्याबलेन स्वकीयं भैरवरूपं विधाय मानसवेगं सहसा सम्मोहयन्ती तम् अग्निपर्वते न्यक्षिपत् । अनन्तरं च नरवाहनदत्तमादाय गन्धर्वपुरस्थे एकस्मिन् आखेये[4] निर्जले कूपे निक्षिप्य उवाच, 'आर्य त्वया इहैव मनाग् स्थातव्यम् । अत्र वर्तमानस्य ते सर्वविद्याधराधिपतिता भाविनी इति सा श्रुतिः कल्प्या । अद्य अहं ज्येष्ठव्यतिक्रमणेन दुर्बलीभूताः विद्याः सबलयितुं यामि । अचिरादेव च त्वामिहैव पुनः अभ्युपगमिष्यामि । एवम् उक्त्वा सा विद्याधरी वेगवती वेगवती क्वापि निर्गतवती । मानसवेगश्च अग्निपर्वते निक्षिप्तोऽपि न मृतः इतिः ततः स्वगृहमागात्' ।

॥ इति कृत्यप्रक्रिया ॥

---

१. 'वह्यं करणम्' । २. 'हनो वा यद् वधश्च वक्तव्यः' । ३. 'हनस्त च' । ४. 'ई च खनः' ।

## अथ पूर्वकृदन्तप्रकरणम्

### *मदनमञ्चुकामार्गणे निरुपपदकृतः*

103. इतः कूपस्थितस्य नरवाहनदत्तस्य अवेक्षकः[1] एकः वीणादत्तनामा गन्धर्वः तां दशां निरीक्ष्य दयोदन्वति निमङ्क्ता समजायत। अतः तदन्वयनामनी पृष्ट्वा तस्य हस्तग्राही[2] तं कूपाद् उद्धरन् तदानीन्तनतदीयदुःखस्य नशिता[3] भूत्वा उवाच, 'त्वं मानुषश्चेत् न गन्धर्वः, तदा मानुषागम्यस्य अस्य नगरस्य पथः कथं लम्भकः, एतत् तत्त्वतः मां प्रतिबोधयन् मत्सन्देहं दूरीकुर्याः' इति। एवं वदावदः स नरवाहनदत्तात् व्योमचर्यविद्याधर्या तत्र अवटे तन्निक्षिप्तेः बुधः[4], गुणी वीणादत्तः, चक्रवर्तिलक्षणोपेतं तं समवलोक्य सूनृतवाचां भाषमाणः स्वगृहं नीत्वा विविधोपचारैः तम् उपाचरत्। नरवाहनदत्तश्च अन्येद्युः तत्पुरस्थान् सर्वान् स्ववाद्यघोषेण रमणान् वीणाहस्तान् अवलोक्य प्रियं, प्रज्ञं[5] च वीणादत्तम् अकथयत्—'निलिम्पकल्पानाम् एतेषां सर्वेषाम् आबालवृद्धपौराणाम् वीणाधारयाणां पश्यम्[6], अत्रत्यारविन्दालौकिकामोदकामोदानां च जिघ्रम्, परमानन्दविन्दं माम् एतत्सर्ववीणाधारणकारणजिज्ञासनाकूपारपारयं कुरु' इति। तदाकर्ण्य तदुत्तरस्य ददः[7] वीणादत्तः, तत्रत्यराजपुत्रीपरिचयस्य अवतानः[8], नरवाहनदत्तं जगाद—'अत्र रिपूदेजयः, परमधनुर्वेदवेदयः सत्यन्यायानत्यायः, विदः सर्वशास्त्राणाम्, वितृदः अन्यदुःखानाम्, सागरदत्ताख्यो गन्धर्वराजः अस्ति। तस्य स्वकीयसौन्दर्याधरीकृताप्सरो-

---

१. 'ण्वुल्तृचौ', 'युवोरनाकौ'। २. 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः'। ३. 'रधादिभ्यश्च'। ४. इगुपधज्ञाप्रीकिरः कः। ५. 'आतश्चोपसर्गे'। ६. 'पाघ्राध्माधेट्दृशः शः'। ७. 'ददातिदधात्योर्विभाषा'। ८. 'तनोतेरुपसंख्यानम्' इति णः।

रूपा गन्धर्वदत्ताख्या नवयौवनोदया धया, गान्धर्वे परमोत्कर्षं प्राप्ता, शौरिणा स्वयं प्रदत्तं स्वगीतकं जेगीयमाना, 'यः कश्चिद् गान्धर्वविद्‌ः त्रिभिः ग्रामैः सम्यग् वैष्णवं स्तुतिगीतकं वीणायां वादयति स एव मे पतिः' इति निश्चितवती। अस्या राजपुत्र्या एतन्निश्चयं ज्ञात्वा सर्वे वीणासु शिक्षन्ते किन्तु अद्यावधि कोऽपि न तथाभूतो वीणावादनपारग: समजायत इति गृहे गृहे[1] ग्रहेण[2] आविष्टानाम् इव सर्वेषां हृदि तदवाप्ति-दावोज्ज्वलो ज्वालोऽवलोक्यते। वीणादत्तात् एतत् आकर्ण्य समासादित-सकलकलावैदुष्यस तयः नरवाहनदत्तः तं प्रत्युवाद—'अहं सर्वासां कलानां स्वयंवरवृतः पतिः। त्रैलोक्ये वर्तमानं यावद्गान्धर्वं तस्य सर्वस्य नाथः'। एतन्निशम्य वीणादत्तो नरवाहनदत्तं सागरदत्तस्य अन्तिकं नीत्वा उवाच— 'अयं वात्सराजिः नरवाहनदत्तः, अशेषगान्धर्वप्रवीणः। नर्तक[3]-गाथक[4]-गायनी[5]-नायक-नन्दक-नन्दनः, स्वकीयापूर्वसौन्दर्यसमाकर्षितषोडशहायनी-गणः,[6] विद्याधरीहस्तात् इह नगरे विभ्रष्टः त्वत्सामीप्यसरकः[7] सञ्जातः। गन्धर्वाचार्यः अयं केशवस्तुतिगीतकं वेत्ति' इति। एतदाकर्ण्य राजा अब्रवीत् 'अहो सत्यं सर्वमेतत्। गन्धर्वाणां मुखेभ्यः अपि मया एतत्सर्वमाकर्णितम् इत्ययमस्माकं मान्यः[8]। जीवकोऽयं नूनं देवांशः, कथमन्यथा मानुषो विद्या-धरीं सङ्गत्य इह गन्धर्वपुरम् आगच्छेत्?

[ इति निरुपपदकृतः ]

### *मदनमञ्चुकामार्गणे सोपपदकृतः*

104. एतत्कथनानन्तरं राजाज्ञया महत्तरिकाभिः आनीतां गन्धर्व-कलाकलापज्ञां गन्धर्वदत्ताभिधानां राजकन्यां निजपितुः पार्श्वे समुपविश्य तद्वचसा उपवीणयन्तीम् अतिप्रह्वाम् शर्मदां[9] ब्राह्मीं श्रियम् इव अङ्गु-

---

१. 'गेहे कः'। २. 'विभाषा ग्रहः'। ३. 'शिल्पिनि ष्वुन्'। नृतिखनिरञ्जिभ्य एव'। ४. 'गस्थकन्'। ५. 'ण्युट् च'। ६. 'हृश्च व्रीहिकालयोः' ततः 'दामहायनान्ताच्च', इति ङीप्। ७. 'प्रसृल्वः समभिहारे वुन्'। ८. 'आशिषि च'। ९. 'आतोऽनुपसर्गे कः'।

लित्रेण स्वरान् श्रुतिषु योजयन्तीम् दृष्ट्वा नरवाहनदत्तो विस्मितिकार[1] तद्गीते रूपे च नितरां मुग्धोऽपि अवदत्—'तन्त्रीवादनपटिष्ठपतिकामे, कल्याणाचारे, राजपुत्रि, समस्थस्ते[2] वीणास्वरः इति विविधस्वरवादनबहुक्षामाया अपि भवत्याः, जाने, कुत्रचित् तन्त्र्यां बालो वर्तते'। एवमुक्त्वा यावत् सा निरीक्षते तावत्तत्र एको बालः तया समवापि इत्येतदवगत्य सर्वेऽपि ते स्वोच्छ्रायस्वर्गह्वायम्[3] इव आषाढपुरगिरिम् अधिवसन्तो गन्धर्वाः विस्मयम् आजग्मुः । विरतिम् अश्चितायाश्च तद्विपञ्च्यां दिविष्ठ-प्रष्ठ-परमेष्ठी इव गन्धर्वपतिः सागरदत्तः गन्धर्वदत्ताहस्तात् तां वीणां भूमिष्ठपुञ्जिष्ठगन्धर्वकलामूर्तेः इव नरवाहनदत्तस्य हस्ते समर्पयन्, 'राजपुत्र इमां गृहीत्वा स्वकीयस्वरामृतरसेन अस्माकं श्रुतीः सन्तर्प्य अस्मच्छोकापनुदो[4] भव', इत्युवाच। नरवाहनदत्तश्चापि तथानुज्ञातः उपवीणयन् तथा विष्णुगीतकम् अगायत् यत् सर्वे ते गन्धर्वाः चित्रलिखिता इव अतिष्ठन् । गन्धर्वदत्ता चापि स्वप्रतिज्ञानुसारं सर्वथा सन्तोषप्रदं प्रफुल्लकुमुदमालया इव प्रणयार्द्रया दृष्ट्या तम् अनिभृतमवृत । तदालोक्य तथाभूतां तत्प्रतिज्ञां स्मरन् सन्मार्गप्रज्ञः तद्भावसंख्यश्च[5] नरपति', गन्धर्वदत्तां स्वसुतां सदिव्यातोद्यके विवाहोत्सवे, विष्णुगीतसञ्ज्ञाय[6]नरवाहनदत्तसञ्ज्ञाय ददौ इति नवोढया गन्धर्वदत्तया दिव्यान् भोगान् भुञ्जानो यथावसरं सुरापः स शीधुपीं[7] ताम् अनु क्रीडन् चिरं तत्र तस्थौ ।

105. एकस्मिन् दिने कवचहरो वत्सेशांशहरो मनोहरां नगरश्रियं समवालुलोकयिषुः नगरान्निर्गतः सुखाहरान् तांस्तान् प्रदेशान् आलोक्य भ्रमणार्हं पुरोद्यानं समदस्तम्बेरम इव प्रविवेश। तत्र च दुहित्रा सह आकाशात् अवतरन्तीं, पुत्रि, सोऽयं वत्सराजः ते भावी पतिरिति निजसुतां जल्पन्तीम् अनभ्रेऽपि खशयां[8] सवृष्टिं विद्युतम् इव व्योमचरीम्[9] एकां योषितम् अपश्यत्।

---

१. 'कर्मण्यण्। २. 'सुपि स्थः'। ३. 'ह्वावामश्च' इत्यणि 'आतो युक्चिण्कृतोः'। ४. 'तुन्दशोकयोः परिमृजापनुदोः'। ५. 'समि ख्यः'। ६. 'कर्मण्यण्'। ७. 'पिबतेः सुराशीध्वोरिति वाच्यम्' इति सहकारेण 'गापोष्टक्' इति टकि, टित्त्वात् ङीप्। ८. 'अधिकरणे शेतेः'। ९. 'चरेष्टः', ततष्टित्त्वात् ङीप्।

समुपागताञ्च, 'का त्वम्, किमर्थं चेहागता' इति ताम् अन्वयुङ्क्त । तदाकर्ण्य ईप्सितोपक्रमणी दिव्या योषित् तम् अब्रवीत्—'देव, अहं गिरिशप्रभावेण भिक्षाचरी[1]कृतनिजारिवर्गस्य, शत्रुसेनाचर[1]सञ्चूर्णनप्रसादितभर्गस्य, धार्मिकपुरस्सरस्यापि[2] संयुगपूर्वसरस्य, तपस्विनोऽपि महासिधनुरादायचरस्य[1], सत्पथोच्चरणभीरोरपि च रणविभीतेः देवसिंहाभिधानस्य विद्याधरपतेः यशस्करी[3] विद्या इव वचनकरी जीवनसहचरी भार्या धनवती नाम। एषा च अजिनावतीनामधेया पतिंवरा मदीया कन्या करप्रतापेन दिवाकरस्य[4] इव, शरीरधाम्ना च विभाकरस्य इव, स्वपक्षसम्पदाम् आदिकरस्यापि विपक्षसम्पदाम् अन्तकरस्य, निजप्रजानरुष्करस्यापि महाधनुष्करस्य, निजकुलकुमुदनिशाकरस्यापि अज्ञानतमोऽहस्करस्य, द्विकरस्यापि बहुकरस्य, कर्मकरायमाणादिबलसामन्तस्यापि अनूरीकृतशासनारिनारीनिस्सिन्दूरीकृतसीमन्तस्य चण्डसिंहस्य पुमनुजा भगिनी। यस्याः प्रियङ्करो[5] भर्ता गगनोद्गतया गिरा भवान् आदिष्टः इति वेगवत्या अत्र निक्षिप्तं भाविनं विद्याधरेश्वरं भवन्तं निजविद्याबलेन अवगत्य स्वच्छन्दम् अभिधातुम् इहायाता। स्वैरं वैरकारा विद्याधराः हि नैसर्गिकमानवद्वेषेण एककं त्वां स्तम्बकरि-कडङ्कर-कुक्षिम्भरि-बलि-नाथहरिम् इव मा मृत्युदेवतायै उपहारीकुर्वन्तु इति विद्याधरैकगम्ये अस्मिन् स्थाने तव स्थानम् अस्थाने। तदागच्छ, आवामन्यत्र नयावः, साम्प्रतमस्मात् त्वां तद्गम्यां भुवं नयावः। सम्प्राप्ते चावसरे त्वम् एताम् मदीयां सुतां परिणेष्यसि'। एवम् उक्त्वा धनवती तम् आदाय ससुता दिवमुद्गत्य श्रावस्त्याः उपवने च तं निक्षिप्य अजिनावत्या सह तिरोहितवती।

106. एतस्मिन् एव अन्तरे वातमजान् रजयन् दूरागतो राजा प्रसेनजित् उदाराकारलक्षणं हस्तिघ्न[6]बलोपपन्नमपि प्रियंवद[7] तं राजपुत्रं दृष्ट्वा सकौतुकं तम् उपसृत्य अनुयुक्ततत्कुलनामधामा अतिप्रीतः स्वभवनं

---

१. 'भिक्षासेनादायेषु च'। २. 'पुरोऽग्रतोऽग्रेषु सर्त्तेः'। ३. 'कृञो हेतुताच्छील्यानुलोम्येषु'। ४. 'दिवाविभानिशा०'। ५. 'क्षेमप्रियमद्रेऽण् च'। ६. 'शक्तौ हस्तिकपाटयोः'। ७. 'प्रियवशे वदः खच्'।

नीत्वा तच्छीलशौर्यादिगुणवशंवदः भगीरथयशोऽभिधां निजकन्याम्, अजायाघ्नस्यापि[1] जायाघ्नस्य तस्य, अपतिघ्नीम् अपि पतिघ्नीश्चकार इति तद्दिनोदाय धात्रा सृष्टया मूर्तिमत्या लक्ष्म्या इव तया महार्हविभवो नरवाहनदत्तः तत्र चिरम् अरंस्त ।

107. अथैकदा लोकलोचनानन्दवर्षिणि रजनीरमणे प्राचीदिग्वधूमुखमण्डने, मानिनीमानखण्डने, निरभ्रनिर्मलव्योमदर्पणे भगीरथयशोवक्त्रे इव अमृतदीधितौ दिग्भामिनीभालबिन्दौ इव इन्दौ उदिते सति कौमुदीसुधाधौते हर्म्याग्रे प्रियया सह तदिच्छया असौ असावीत् । सेवितापानलीलश्च सः अभ्यन्तरं गतः भगीरथयशोयुक्तः शयनीयकं भेजे । तत्र च तस्यां प्रियायां सुप्तायां सुप्तविनिद्रकः असौ अकस्मात् अचिचिन्तत्, 'भगीरथयशःप्रीतिसम्पदः माम् इह रमयन्तीत्यन्याः मामकीनाः भामिन्यः न स्मरयन्ति । सर्वङ्कषो[2] विधिरेवात्र हेतुः । ललाटंतप[3]निष्ठुराक्षरां तस्य लिपिं वाचयितुम् आत्माहितविश्वविश्वम्भराभारभुजङ्गमोऽपि[4] वाचंयमः[5] । स एव हि शुनिन्धय-खरिन्धय-स्तनन्धयान् अपि उग्रंपश्यमहामहिमशालिनाम् आढ्यंभविष्णूनाम् मुष्टिन्धयान् करोति । प्रियकारान् अपि च प्रियेभ्यः पृथक् करोति इति ऋतिकरे काले द्विषंतपा[6] अपि मत्प्रियंकराः सचिवाः

---

१. 'लक्षणे जायापत्योष्टक्', 'अमनुष्यकर्तृके च' [अविद्यमानो जायाघ्नस्तिलको यस्य इत्यजायाघ्नः, तस्येति बहुव्रीहिः न जायाघ्नोऽजायाघ्नः इति तत्पुरुषो वा । जायां हन्तीति जायाघ्नः । तस्यापि अजायाघ्नस्येतिविरोधः । जस्य=पितुः, अयः शुभावहो विधिः तम् न हन्तीति जायाघ्नः तस्येति परिहारः (निजजन्मना पितुः समृद्धिकरस्येति तत्त्वम्) तथा, अविद्यमाना पतिघ्नी पाणिरेखा यस्याः सा अपतिघ्नीति बहुव्रीहिः, न पतिघ्नी अपतिघ्नीति तत्पुरुषो वा अत्रत्यो विरोधः द्वितीयस्य पतिघ्नीशब्दस्य, पातीति पः=रक्षकः, तं तिग्नुवन्ति आस्कन्दन्ते इति पतिगो द्वेषिणः तान् हन्तीति पतिग्घ्नः शत्रुघाती ('मूलविभुजादित्वात्कः') तस्य स्त्रीं चकार इति व्युत्पत्त्या अवसेयः ।]

२. 'सर्वकूलाभ्रकरीषेषु कषः' । ३. 'असूर्यललाटयोर्दृशितपोः' । ४. 'गमेः सुपि वाच्यः' । ५. 'वाचि यमो व्रते', 'वाचंयमपुरंदरौ च' । ६. 'द्विषत्परयोस्तापेः', 'खचि ह्रस्वः' ।

मरुभूत्यादयो मत्तो वियोजिताः। न अहम् अद्यावधि अस्य दुःखस्य अन्तगः। सर्वासु अवस्थासु अस्मत्सुसखा चतुरो गोमुखः अधुना दूरगः इति न सोऽपि वर्तमानौद्विग्न्यान्धंतमसपूर्णपाणिन्धमे जीवनाध्वनि इरंमद इव मां मार्गम् इह निर्दिशति'।

108. एतत् चिन्तयन् एव स निद्राघ्नं[1] मधुरं मृदु च 'हा! दुःखम्' इति कयाचित् नार्या इव उदीरितं वचः शुश्राव। तत् श्रुत्वा दीप्तप्रदीपे स्वकीयजनसुगेऽपि[2] असंस्तुतजनदुर्गेऽत्र[3] भवने यावत् इतस्ततः अवलोकयति तावद् गवाक्षान्तः तदानींतनतमोऽपहं[4] नार्याः दिव्यं मुखचन्द्रं पश्यन्नपि शेषम् अङ्गम् अपश्यन् तद्दर्शनोत्सुकताक्लेशापहृतद्रूपाकृष्टनयनः दोलायमानचेताः क्षणम् अतिष्ठत्। एतस्मिन्नेवान्तरे गवाक्षात् सा दिव्या स्त्री प्रदर्शितनिजपाणिपल्लवतल्लजा 'इत एहि' इति सूचकं विरहितवर्णसङ्घाटम् अङ्गुल्या अससङ्केतत्। तदवलोक्य संसुप्तदयितात् निवासभवनात् स्वैरं निर्गत्य तद्दिव्ययोषितम् उपागतवति तस्मिन् समुत्के सा इत्थम् अशब्दायिष्ट—'हा! मदनमञ्चुके अन्यहृदयकपाटघ्नं[5] पतिं प्रशंसन्ती त्वं हतासि' इति। तदाकर्ण्य स्मृतप्रियः प्रज्वलद्विरहवह्निः नरवाहनदत्तः तां दिव्यभामिनीम् अभाणीत्—'सुभगे प्रियङ्करेण अनेन रूपेण, सुभगंभावुकं[6] माम्, इह दर्शनं ददती का त्वम् एतादृशी द्युसदः सदृग् अङ्गनाग्रणीः, निजमर्मस्पृशा वाचा विस्माययसि? कुत्र वा त्वया मदीया प्रिया मदनमञ्चुका समवलोकिता? किमर्थं च युवजनकामप्रसूः त्वं मम उपनिषत् अवलोक्यसे? एतत्सर्वं सविस्तरं श्रावय' इति। एतत् निशम्य सा तं तन्निविडनिशि ततोऽतिदूरं नीत्वा 'मदनांशभाक्, शृणु सर्वम्' एवमुक्त्वा इत्थं वक्तुम् आरभत—

109. अस्ति विविधप्रतिभितशिल्पिनिर्मितप्रतिभित्यभ्रंलिह[7]प्रासादपुष्करावत्यां पुरि प्रातिकूलिकपृतनासरित्कूलमुद्रुजोद्वच्च इवायोध्यः, प्रत्यहं खारिम्पचपात्रपाचितनखम्पचपायससम्पादिताशनायिताशितंभवः[8],

---

१. 'अमनुष्यकर्तृके च'। २-३. 'सुदुरोरधिकरणे'। ४. 'अपे क्लेशतमसोः'।
५. 'शक्तौ हस्तिकपाटयोः'। ६. 'कर्त्तरि भुवः खिष्णुच्खुकञौ'।
७. 'वहाभ्रे लिहः'। ८. आशिते भुवः करणभावयोः'।

सपत्नासूर्यंस्पश्य[1]दारसुखविधुंविधुन्तुदारुन्तुदः[2], मन्दुरानददपरिमित-तुरङ्गमभितङ्गमोऽपि कुलायिकापरिपालितागणितकूजद्यजुःसामगविहङ्गमः, जनमेजय[3] इव द्विषन्नागसंहर्ता अपि भुजङ्गभीरुः, भयङ्कर भूभृद्भगन्दर-पुरन्दरः, सद्गुणग्रामगोऽपि सर्वत्रगविचारः शत्रुशीर्षघाती, राजयराज-वर्चसः, अग्न्याराधनपिङ्गलः, पिङ्गलगान्धारो नाम विद्याधरेश्वरः। मित्रशीः अपि समवाप्तगुरुजनशुभाशीः, सत्यशीलतनुच्छत् स सञ्चाल्यमानागणित-जनोपकृतिसंस्थः अपि शंस्थः[4], सर्वसाधुकारी, अनुजीविभिः अपि बन्धु-व्यवहारी, प्रातः स्नायी स्थण्डिलशायी[5] क्षीरपायी ब्रह्मवादिनाम् आदेशा-नुसारम् अग्निष्टोमयाजी[6] सोमयाजी च भूत्वा अग्निचित्सोमसुत्ख्यातिम् अवाप। तस्मात्, एवं समाराधनप्रसन्नस्य हुतादो वराद् विजावा[7] निजो-पजीविप्रजाजनकामदुघग्रणेः, सर्वसत्त्वाभिलष्यमाणशर्मणः अपि क्रव्यादां[8] सुशर्मणः तस्य असन्तानाधिप्रशामः प्रतान् प्रभावतीनाम्ना कन्या अहम्। एकदा च आषाढपुरे स्वाभिन्नहृदयमानिनीं निजसखीं वेगवतीं द्रष्टुम् अहम् अगमम्। किन्तु सा क्वापि वनवर्तिनी तपसि स्थिता इति ताम् अप्राप्य तन्मातुः पृथिवीदेव्याः मुखात् त्वत्प्रियां मदनमञ्चुकाम् अत्र स्थितां ज्ञातवती, अतः ताम् अवलोकयितुम् अत्र आयाता। सा च त्वद्विरहविधुरा, अनशनकृशा, पाण्डुरधूसरा, बद्धैकवेणी, त्वद्गुणगायनी, तद्दुःख-दुःखितोदश्रुविद्याधराधीशकन्यावृन्देन परिवारिता तव स्वरूपपरिचयं मह्यम् अददात् इति विद्याप्रभावेण अहं त्वाम् इहस्थं विज्ञाय त्वदानयनाय त्वत्प्रियतमंमन्यां[9] ताम् आश्वास्य तदर्थसिद्ध्यै तव अभ्याशम् आशु समागता अस्मि। किन्तु इह प्रेमिनरंमन्यं[10] त्वाम् अन्यचिन्तानिमग्नं समवलोक्य, 'हा! दुःखम्! इत्युक्त्वा मया त्वदीयस्त्रियंमन्या[11] सा अनुशोचिता। एतन्निशम्य अत्युत्कण्ठितः वासवदत्तजः[12] तां जगाद, 'मयि कृपालुश्चेत् तदा अदृष्टजव्यतिकरेण उपलब्धा त्वं, यत्र मे प्रिया मदनमञ्चुका वर्तते तत्र नीत्वा मां तद्वियोगापारपरिखापारदृश्वानं[13] कुरु' इति। (इति सोपपदकृतः)

---

१. 'असूर्यललाटयोर्दृशितपोः'। २. 'विध्वरुषोस्तुदः', 'अरुर्द्विषदजन्तस्य मुम्'। ३. 'एजेः खश्'। ४. 'स्थः क च'। ५. 'व्रते'। ६. 'करणे यजः'। ७. 'विड्वनोरनुनासिकस्यात्'। ८. 'क्रव्ये च'। ९. 'आत्ममाने खश्च'; 'खित्यनव्ययस्य'। १०-११. 'इच् एकाचोऽम्प्रत्ययवच्च'। १२. 'सप्तम्यां जनेर्डः', 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्'। १३. 'दृशेः क्वनिप्'।

*मदनमञ्जुकामार्गणे निष्ठानिर्देशः*

110. एतदाकर्ण्य तम् आदाय खम् उत्पतन्ती प्रभावती विहगेन मार्गेण ज्योतिष्मत्यां निशि गन्तुं प्रवृत्ते। यान्ती च एकत्र ज्वलन्तम् अग्निम् अवलोक्य करधृत[1]नरवाहनदत्तहस्ता तत्प्रदक्षिणाम् कुर्वाणा सा प्रौढा युक्त्यैव विवाहविधिं निर्वर्तितवती[2]। नभस्तलात् उन्नतावनतां पृथिवीम् आशीविषगतिसदृशीः सरितः, अभ्रंकषान् पर्वतान्, अन्यानि च कौतुकानि पदे पदे अमुं प्रियं प्रदर्शयन्ती समुत्पतनक्रमेण अतिदूरम् आजगाम। तत्र चाकाशगमनश्रान्ते नरवाहनदत्ते पिपासौ, व्योममार्गाद् अवतीर्य चन्द्रांशुधवलाम्भसः सरसः समीपे एकस्मिन् वनान्ते तम् अवातारयत्। तत्र पीताम्भसः क्षीणवदध्वक्लान्तेः तस्य आश्रितैकान्तलतोगु[ं]त-तरुरमणीये कानने कान्तालिङ्गनलालसा समुत्पन्नवती इति नरवाहनदत्तेन हठात् अर्थिता प्रभावती कृताश्वासां मदनमञ्जुकां चिन्तयन्ती कृच्छ्रादनिच्छया तदिच्छापूर्तौ प्रवृत्ता तस्मै स्वाभिप्रायं सूचयन्ती इमां कथाम् अकथयत्—

111. आसीत् पुरा पाटलिपुत्रे काचित् दून[3]दयिता एकसूनुः अतिरूपवती पून[4]धना धनीका समुच्छून[5]कामवासना। सा च आत्मतोषाय अनुनिशं परपुरुषसङ्गत्यै 'पुत्र, त्वदर्थं प्रातः मोदकान् आनेतास्मि,' इति शून्यभवनप्रहीणं[6] सुतं समाश्वास्य इतस्ततः याति स्म। यतो हि अन्वहमुखं सा मोदकान् आनीय बालकाय ददाति स्म। अतः स तदाशया गृहे अदूनचेताः[7] तूष्णीम् अतिष्ठत्।

112. एकदा विस्मृतिवशात् मोदकान् अनानीयमाना सा मोदकान् याचमानाय बालकाय अकथयत्—'पुत्र, अहं तु स्वकामुकरूपमोदकम्

---

१-२. 'निष्ठा'। ३. 'दु गतौ' इत्यतः 'क्ते दुग्वोर्दीर्घश्च'। ४. 'पूञो विनाशे' इत्यतः क्ते, 'ल्वादिभ्यः' इति नत्वम्, निर्धनेत्यर्थः। ५-६. 'ओदितश्च'। ७. स्वादय ओदितः; अतः दूङ् परितापे अस्य 'ओदितश्च' इति निष्ठानत्वे, दूनः।

अतिरिच्य न अन्यं मोदकं जाने'। तन्निशम्य, 'अन्यासक्तया अनया मदर्थं मोदका न आनीताः' इति वीताश्वासनाशाऽवशीन[1]स्वान्तः स शिशुः निरसुः सञ्जातः'। इत्थं हे प्रिय, त्वया सह संगता अहं सुतरां त्वां स्वीकरोमि चेत् मयैव त्वत्सङ्गमाय कृताश्वासाया अपि इदानीं वृक्णाशायाः[2] मदनमञ्चुकायाः कुसुमसुकुमारं हृदयं परिस्कन्दीकृतं भवेत् इति प्रतिस्तब्धा अहं दयितम् अपि अन्यूनदयितं त्वां न अभिलषामि' इति।

*मदनमञ्चुकासमागमः*

**113.** प्रभावत्या इत्थमुक्तः नरवाहनदत्तः तस्या चारित्रौदार्यं भृशं प्राशंसत्। नवनवाश्चर्यनिर्माणकौशलं च विधेः अनुचिन्तयन् 'यत्र मदनमञ्चुका आस्ते, तत्र मां नय' इति च पुनः ताम् अब्रवीत्। तच्छ्रुत्वा प्रभावती तम् आदाय व्योममार्गेण आषाढपुरं प्राप्य स्नेहेन विना निर्वाणोन्मुखीं दीपप्रभां रक्षित्री स्नेहेन इव, ग्रीष्मे शुष्क[3]जीवनाम् नदीम् प्रावृट्वृष्टिपूरेण इव विरहाधिक्षामाम् शुष्यत्तनुम् मदनमञ्चुकां तेन सङ्गमयामास इति शर्वरीशर्वरीशयोः इव तयोः सङ्गमः अन्योन्यानन्दाय समपद्यत। तत्र उभौ अपि तौ प्रभावतीप्रभावोपनतानि सुपक्वानि[4] फलानि अन्यानि स्वादिष्ठभोज्यानि च अभुञ्जाताम्। तद्विद्याबलेनैव च मदनमञ्चुकामपहाय न कोऽप्यन्यः प्रस्तीमेषु[5] अपि जनेषु तं द्रष्टुम् अशकत्।

**114.** प्रातःकाले विरहकृशायाः तस्याः एकवेणीं मुञ्चन्तं निजप्रियम् अत्यमर्षपरवशा मदनमञ्चुका जगाद—'क्षीबे मानसवेगे हते एव मम एषा वेणी हर्षोत्फुल्लनेत्रेण आर्यपुत्रेण तदसृक्समुन्नहस्तेन मोक्तव्या, मृतायाः मम एषा मया सहैवमेव बद्धा वा दग्धव्येति समधिकदुःखनुन्नया[6] मया विन्नम्[7] आसीत्। किन्तु असौ अग्निपर्वते वेगवत्या निक्षिप्तः अपि अदृष्टेन

---

१. 'विभाषाऽभ्यवपूर्वस्य', 'हलः', 'श्योऽस्पर्शे'। २. ओव्रश्चू छेदने; स्वरतिसूति इति वेट्कत्वात् 'यस्य विभाषा'; 'ओदितश्च' तस्यासिद्धत्वात् 'निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः'। ३. 'शुषः कः'। ४. 'पचो वः'। ५. 'स्त्यः प्रपूर्वस्य', 'प्रस्त्योऽन्यतरस्याम्'। ६-७. 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्'।

त्राणो न म्लानः इति विदितमेव भवतः, तथापि जीवत्येव तस्मिन् अद्य एषा त्वया मुक्ता इति ह्रीणायाः मे मनो दोदूयते'। साध्व्या पत्न्या इत्थमुक्तो नरवाहनदत्तः तां सान्त्वयन् इत्थम् उवाच—'विद्याः समासाद्य अचिरादेव अमुं शत्रुं हत्वा पूर्तत्वदभिलाषचित्तः कृतकृत्यः शान्तचिन्तां त्वां करिष्यामि इति खेदं मा गाः'। एवं मदनमञ्चुकां समाश्वास्य नरवाहनदत्तो वैद्याधरे पुरे उवास। प्रभावती च ध्यातस्वविद्याप्रभावतः ज्ञातनरवाहनदत्ता स्वयमन्तर्हिता एव तदीयम् एवम् अप्रतर्कितरूपं कृतवती यत् तद्रूपेण ख्यातोऽपि राजपुत्रो निःशङ्कं यथासुखं विविधान् भोगान् भुञ्जानः तत्र आसाञ्चक्रे तथापि इयं मदनमञ्चुका वेगवत्या 'वयस्या' इति इमां वित्तीकृत[1]निजसखीसख्यैकचित्तीभूता प्रभावती निजसखीमिव सर्वथा परिचरति, एवञ्च 'अयं भित्ती[2]कृतसकलसपत्नस्वान्तः प्रच्छन्नोऽनङ्ग इव मूर्तो नरवाहनदत्तः' एतत्सर्वं जानानाः आषाढपुरवासिनः मानसवेगतः तद्रहस्यम् उद्घाटयन्तो निजकर्त्तव्यानृण्यं जग्मुः।

*मदनमञ्चुकायाः स्वापहरणवृत्तान्तः*

115. एकदा पारस्परिकवार्ताप्रसङ्गेन मदनमञ्चुका मानसवेगकृतस्वापहरणवृत्तान्तं निगदितवती यल्ललितललनालुब्धो गृध्यागुधितो मानसवेगः[3] क्षुधितो हर्यक्षो हरिणीमिवाभिभूय स्वामायया माम् अवहृत्य क्रूरकर्मभिः भाययन् यावदेव अनुचुकूलयिषति तावदेव अमर्षितेन, समुद्धृतासिना, ललज्जिह्वेन, भक्तजनाञ्चितवाञ्छितेन, भैरवाकारेण आविर्भूय भगवता भैरवेण सहुङ्कारं प्रधर्षितः—'किमियं विद्याधरेन्द्राणां भाविचक्रवर्तिनो भार्या अस्मासु स्थितेषु एवं परिभूयते'? भगवता इत्थमुक्तः पापो मानसवेगो मुखाद् रक्तं वमन् अवन्यां क्लिशितो[4] निपतितवान्। ततः तिरोहिते देवे, निष्कुषिततद्धुङ्कारभयशल्यः, क्षणाद् अवाप्ताश्वासनः स मयि क्रौर्यान्निवृत्तो निजगेहं गतः। अन्तःपुरचेट्यश्च तदानीम् अतिभीतां, वियोगविक्लवां, प्राणपरित्यागोन्मुखीं माम् उपगत्य मधुस्फीताभिर्वाग्भिः सान्त्वयन्त्यः एवम् उक्तवत्यः यत् पुरा पूतचरित्रां काञ्चिद् रूपवतीं

---

१. 'वित्तो भोगप्रत्यययोः'। २. 'भित्तं शकलम्'। ३. 'वसतिक्षुधोरिट्'।
४. 'क्लिशः क्त्वानिष्ठयोः'।

मुनिकन्याम् अवलोक्य काममोहितो हठात् ताम् अपहरन् अयं मानसवेगः तद्बन्धुभिः शप्तो यद् अनिच्छन्तीं परनारीम् अभिजिगमिषोः ते मूर्द्धा शतधा विदलिष्यतीति बलाद् अयं परदारान् गन्तुं नैव शक्नोति। अतो मा भैषीः । देवादेशेन अचिरमेव तव भर्त्रा सह सङ्गमः सम्भावितः इति प्रमोदिता भव । एवम् उक्तवतीष्वेव तासु तत्स्वसा वेगवती माम् आश्वासयितुम् इहागत्य इतो गता त्वां प्राप्ता इत्यतः परं न किञ्चित् ते निगूढम्[1] ।

116. तदनन्तरमेव ज्योत्स्नासितैः वस्त्रैः अमला चान्द्री तनुरिव स्वकीयेन सौम्येन दर्शनेन अमृतेन इव सिञ्चन्ती दुरात्मनः अस्य साध्वी धात्री पृथ्वीदेवी तत्रैव आगत्य इत्थं माम् अवबोधितवती यद् 'मद्दुहितुः वेगवत्याः अत्र अस्मिन् राज्ये पितृकल्पितो भागो वर्तते, सा च त्वदीयेन भर्त्रा परिणीता इति त्वदीया सखी। अतः तद्धनम् आत्मीयं स्वम् अवबुध्य समुपभुञ्जाना 'शत्रुहस्तनिपतिता कथमहं तदन्नं भुञ्जीय' इति विचारपरा शुभोदर्कं परित्यक्ताहारम् आत्मानं मा उपेक्षस्व । स्वकीयविद्याबलेन अहं सर्वम् एतदवगच्छामि अतः अवितथम् एतद् अहं तुभ्यम् अभिदधे। एवम् उक्त्वा सशपथं सुतासम्बद्धोद्दीप्तस्नेहभावया अहम् अवस्थोचिताहारं कारिता । त्वया सह आगत्य एष भ्राता वेगवत्या पराजितः त्वं च रक्षितः। अतः परं न किञ्चिदहं वेद्मि । बाढम् एतत्, किन्तु यन्नैराश्यध्वान्ताक्रान्तस्वान्तापि वेगवतीसिद्धिम्, अम्लिष्ट[2]चिरिब्धं तद्दैवतवचश्च स्मरन्ती त्वत्प्राप्त्याशासंलग्नान् प्राणान् प्रधृष्य[3] अहं न पर्यत्याक्षम् इति महानुभावायाः प्रभावत्याः प्रभावात् दृढशत्रुसंकटेऽप्यत्र मम प्राणपरिवृढो[4] मया उपलब्धः त्वम् इदानीम्। तथापि एतच्चिन्तया मम स्वान्ते कष्टं वर्तते यत् प्रभावत्याः अनुपस्थितौ तव तद्रूपे विनष्टे आवयोः का दशा स्याद्' इति ।

---

१. 'गुहू सम्वरणे' अस्मात् क्ते ढत्वलोपदीर्घाः। २. 'क्षुब्धस्वान्तध्वान्त'—इत्यादिना साधु, स्पष्टस्वरमित्यर्थः। ३. 'धृषिशसी वैयात्ये' । ४. 'प्रभौ परिवृढः' ।

## *नरवाहनदत्तस्य निग्रहः*

**117.** इत्थम् उद्धुषितवाक्यां मदनमञ्चुकां परिसान्त्वयति नरवाहनदत्ते तत्र तिष्ठति, प्रभावत्याश्च स्वपितुः भवनं समर्णवत्यां तदनभ्यर्णतया[1] विनष्टतद्रूपं नरवाहनदत्तं कमपि तत्र स्थितं पारदारिकं मत्वा एकदा सर्वोऽपि राजकुलपरिजनो भयाद् राजकुलं गत्वा न्यवेदयत् इति भयभीतां वारयन्तीम् अपि मदनमञ्चुकाम् अपवार्य स्वबलान्वितो राजा मानसवेगो नरवाहनदत्तं पर्यविवेष्टत्। तदानीमेव तन्माता पृथिवीदेवी सत्वरं तत्रागत्य राजानम् अब्रवीत्—'पुत्र नायं पारदारिकः अपि तु परिपीतस्फीतवृत्तसकलशास्त्रकलाकलापक्षीरसागरावगाहनोद्भूतामृतयशःश्रृतक्षीरः[2], दान्तः, प्रशान्ताऽऽस्वान्तः, सर्वदाहृष्टहृष्टतनूरुहः विद्याधरैः उचितम् अपचितः वत्सराजात्मजो नरवाहनदत्तः इदानीं निजभार्याम् उपायातः। अयं च अस्माकं जामाता इत्येतद् विद्याबलेन सर्वमहं जानामि'। मात्रा इत्थमुक्तः समुत्पन्नपीनामर्षप्रस्यानस्वेदो नातिप्रह्वो मानसवेगो जगाद—'त्वया सह इह आदितः स्थितः मया अविदितः शत्रुः इति इदानीम् अयं निर्दयं दितः[3], निशितैः शस्त्रैः छितः अवसितः अन्धापीने मितः क्रव्यादां पुरो वा निहितः समवलोकितः स्यात्'। एतन्निशम्य जामातृस्नेहतः मात्रा पुनरभिहितं यद् वैद्याधरे लोके अधर्मो न लभ्यते अतः अयं प्रसङ्गः विद्याधराणां या धर्मार्था सभा तस्याः प्रधानस्य अग्रे उपस्थापनीयः। तेनैव हि यो समुचितो निर्णयः प्रदत्तो भवेत् स शोभतेतराम्। मातृप्रत्तोत्तरवचः एतत् इति गौरवात् मानसवेगेन तत् प्रतिपन्नं किन्तु तं बद्ध्वा तत्र नेतुम् आदेशः अनूत्तः[4] इति श्रुतिनलिकाधीत[5]तत्साता[6]देशविषोन्मत्त इव हृन्निखातकुन्ताघातसमसञ्जातामर्षः नरवाहनदत्तः तोरणस्तम्भम् उत्पाट्य अगणितान् तत्रत्यान् भृत्यान् अतर्दीत्। हतस्य चैकस्य हस्तात् एकम् असिम् आकृष्य दिव्यपराक्रमः सः अन्यान् अपि जघन्यान् निज-

---

१. 'अभेश्चाविदूर्ये'। २. 'श्रृतं पाके'। ३. 'द्यतिस्यतिमास्थामित्ति किति'।
४. 'दस्ति' (अनुपूर्वकात् ददातेः क्तः)। ५. 'धेट् पाने' इत्यतः क्ते 'घुमास्था०' इतीत्वम्। ६. 'षणु दाने' इत्यतः क्ते 'जनसनखनां सञ्झलोः'।

मन्युवह्निदग्धान् अन्तकजग्धान्[1] अकार्षीत्। नरवाहनदत्तीयम् एतत्परा-क्रमम् अवलोक्य मानसवेगो दिव्यया निजविद्यया बद्धं भार्यानुगतं च तं तां सभाम् अनैषीत् इति भेरीमहाशब्दसमाहूताः इतस्ततः शब्दकाराः विद्याधराः सुधर्मायां देवा इव समागत्य सम्मिलिताः।

118. विद्याधरैः परिवृतः तद्राजः वायुपथः रत्नसिंहासनं समुपाविष्ट इति दृष्ट्वा दुष्टो मानसवेगः तदग्रे स्थित्वा इत्थमब्रवीत्—'मर्त्यः अपि स्वसुः अन्तःपुरे चारित्रविध्वंसकः अयं वध्यः' इति। एतन्निशम्य राज्ञा स्वाभियोगे प्रत्युत्तरीतुम् उक्तः आमुक्तो वीरो नरवाहनदत्तः एतत् उत्तरम् प्रत्तवान्[2]—सा एव सभा यत्र सभ्यो भवेत्; स एव च सभ्यः यो धर्मं वदेत्; स एव च धर्मः यत्र सत्यं स्यात्; तदेव च सत्यं यच्छलनिर्मुक्तं प्रतीयेत। अहमत्र मायया बद्धः भूमौ च स्थितः। मत्प्रतिवादी मानसवेगश्च मुक्तः आसने च उपविष्ट इत्ययम् अपि यावत् न अवनौ अवस्थितः तावद् नौ विवादः अनवस्थितः। वायुपथः एतद् आकर्ण्य तमपि मोचयित्वा मानसवेगमपि क्षितौ उपावेशयत्। ततः सर्वेषु शृण्वत्सु नरवाहनदत्तः अभ्यधात् यत् 'अनेन अपहृत्य समानीतां स्वभार्यां मदनमञ्चुकाम् अहमत्र प्राप्तवान् चेत्, तदा कस्य शुद्धान्तो मया ध्वंसितः? अस्याः स्वस्रा वेगवत्या च, मम पत्न्याः मदनमञ्चुकायाः रूपम् अभ्युपगत्य, अहं स्वकीयो भर्ता विहितश्चेत् तदा का मे प्रक्षीणचारित्रापराधिता?'

119. एतत्सर्वम् आकर्ण्य राजा वायुपथः अब्रवीत्, 'भविष्यन्महोदयः अयं महात्मा धर्म्यं वदति इत्ययमधर्मकलङ्कपङ्केन न अङ्कनीयः। एवम् उक्तोऽपि मानसवेगो मोहान्धः यदा अधर्मात् न न्यवर्तत तदा धर्मानुरोधिनः तस्य सन्नद्धसैनिकः महान् संक्षोभः समजायत। तत्रत्यादिव्यकन्यकाः विलोकयन् नरवाहनदत्तश्च अकथयत् यत् मायां विहाय मया सह युध्यस्व, एकेनैव च प्रहारेण क्षितायुः[3] भूत्वा क्षतविक्षतः क्षितौ निक्षिप्तो युद्धकला-निष्णातस्य, नैकदा जन्यनिहतसपत्नासृक्सरित्प्रतिस्नातस्य मम पौरुषञ्च अवलोकस्व। एवमन्योन्यसंजातकलहेषु विद्याधरेषु सभान्तरस्थात्

१. 'अदो जग्धिर्ल्यप्ति किति'। २. प्रपूर्वकात् ददातेः क्ते 'अच उपसर्गात्तः'। ३. 'वाऽऽक्रोशदैन्ययोः'।

सहसैव विदीर्णा। ततस्मात् भैरववपुः, अञ्जननिभः, व्याघ्राम्बरः, चिनिह्नुत-तरणिः विद्युल्लतातरलप्रदीप्तलोचनार्चिः प्रलयमहामेघ इव एको देव आविर्भूय 'न कथमपि भाविविद्याधरचक्रवर्तिनः कुण्ठले[1] अत्र पराभवो भवेत्' इति गर्जन् मानसवेगमुत्थाप्य अधोमुखीचकार। नरवाहनदत्तं चाशु भुजाभ्याम् आदाय संरक्षणार्थम् ऋष्यमूकपर्वतपरिष्ठलं[2] च प्रापय्य तत्रैव संस्थाप्य तिरोदधे।

120. इत्थम् अपनीते ततो नरवाहनदत्ते शान्ते च विद्याधरसम्भ्रमे वायुपथः स्वैः अपरैश्च सहितः स्वहर्म्यम् आजगाम। मानसवेगोऽपि च हर्षविषादाकुलितां मदनमञ्चुकां पुरस्कृत्य आषाढपुरं प्रत्यावृत्तवान्।

121. सुखदुःखयोः चक्रं विधिविधानानुकूलम् अनिर्बाधं परिवरि-वृतीति, तत्रैव च प्राणिनां धीरत्वपरीष्टिः इति विजयलक्ष्मीम् आश्लिष्टः शिवमुपासितः एकोऽपि नरवाहनदत्तः तैस्तैः दारैः संयोजितो मुहुर्मुहु-र्वियोजितः।

122. अथैकदा ऋष्यमूकाद्रिमधिष्ठितं तं प्रभावती समागत्य उक्तवती यत् मम असन्निधानात् पापं चिकीर्षुणा मानसवेगेन भवान् सभां नीतः इत्येतद्विज्ञाय विद्याप्रभावेण भैरवदेवाविर्भावविडम्बनं कृत्वा तत्पाप-पाशात् मया द्विवण्णो[3] भवान् इहानीतः। एतद्धि समिद्धसिद्धक्षेत्रम् इति बलवतां विद्याधराणामपि मते[4], विदिते, जुष्टे, रक्षिते चात्र गिरौ केषाञ्चि-दपि मायाप्रपञ्चो न प्रभवति। ममापि विद्याविभवो नात्र प्रसरतीति कथं त्वमत्र वन्याहारेण वत्स्यसीति मे दुःखम्।

123. एतत् उक्तवत्या प्रभावत्या सह कालं प्रतीक्षमाणः नरवाहनदत्तः मदनमञ्चुकां ध्यायन् तत्र उवास। तत्पर्वतासन्ने पवित्रे पम्पासरसि सस्नौ। स्वादूनि फलानि च मूलानि च पप्सौ। मृगमांसोपदंशश्च तीरतरु-पतितैः सरसं सुगन्धितं च पयः पपौ। एवं तत्र निवसतो रामाश्रमान्

---

१-२. 'विकुशमिपरिभ्यः स्थलम्'। ३. त्रिक्ष्विदा स्नेहनमोचनयोः, 'त्रीतः क्तः' (मया मोचित इत्यर्थः)। ४. 'मतिबुद्धिपूजार्थेभ्यश्च'।

आलोकयतश्च तस्य मनोविनोदार्थं प्रभावती यत्किञ्चिद्रामायणवृत्तान्तम् अवर्णयत् यत् 'इदं ससौमित्रिसीतस्य रामस्य तापसैः सह तरुमूले कृतोटजम् आसितम्[१]; इदं तस्य भुक्तम्[२], इदञ्च यातम्[३] इत्यादि। एवमत्र कतिचिद् दिनानि स्थितः रामः अब्धिं बद्ध्वा विमानीकृतलंकेश्वरः अनेनैव पथा विमानेन जानकीम् आनिन्ये। एवमेव भवान् अपि इह कञ्चित् कालं स्थित्वा, गतः मदनमञ्चुकाम् अवाप्स्यती'त्यादि कथयन्त्या तया सह सजल्पितं[४] सहसितञ्च[५] निवसन् नरवाहनदत्तः दिनानि निनाय।

[निष्ठानिर्देशसमाप्तिः]

124. एकदा धनवत्यजिनावत्यौ उभे विद्याधर्यौ—याभ्यां नरवाहनदत्तो गन्धर्वपुरात् श्रावस्तीं प्रापितः भगीरथयशसं परिणयति स्म—दिवः अवतीर्य परुपायां सुत्वानौ[६] तम् उपजग्मतुः। स्वकीयया सख्या प्रभावत्या सह तत्र अजिनावत्यां मिलितायां धनवती नरवाहनदत्ताय प्रास्तावीत्—'एषा अजिनावती प्राक् मया वाचा तुभ्यं दत्ता इत्यासन्नाभ्युदयेन त्वया अधुना एषा परिणेतव्येति'। एतद् धनवतीवाक्यं प्रभावती नरवाहनदत्तश्च सखीस्नेहात् अनुमुमुदाते। अतः धनवती यथाविधि अजिनावतीं नरवाहनाय अददात् तथा निजविद्याकल्पितदिव्यसम्भारं सुतोद्वाहमङ्गलोत्सवं निर्वर्त्य अन्येद्युः तमेवं बभाषे—'पुत्र, यत्र तत्र चिरं स्थातुम् असाम्प्रतम्। मायावी हि विद्याधरवर्गः इत्यधुना सभार्यः त्वं निजपुरीं कौशाम्बीम् उपढौकस्व। अहमपि निजसूनुना चण्डसेनेन सह तत्रैव आगमिष्यामि'। इत्थमुक्त्वा धनवती दिवमुद्ययौ प्रभावत्यजिनावत्यौ च नरवाहनदत्तं नभसा कौशाम्बीं प्रापयामासतुः।

125. इत्थं कौशाम्ब्या उद्याने अवतारितो नरवाहनदत्तः तत्रत्यैः सर्वैः जनैः अदर्शि इति 'अति भाग्यशालिनो वयं ये दिष्ट्या राजपुत्रं पश्यामः' इत्थं ब्रुवाणानां यूनां जरतां[७] च समन्ततः महान् कोलाहलः समजनिष्ट। नगरोपकण्ठे समुपनिषेदिवांसं[८] सुतं शुश्रुवान्[९] वत्सराजश्च अथ अकाण्ड-

---

१-३. 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसनार्थेभ्यः'। ४-५. 'नपुंसके भावे क्तः'। ६. 'सुयजोर्ङ्वनिप्'। ७. 'जीर्यतेरतृन्'। ८-९. 'भाषायां सदवसश्रुवः'।

सुधासारसंसिक्त इव वासवदत्तया, पद्मावत्या, रत्नप्रभादिभिः वधूभिः यौगन्धरायणादिभिः मन्त्रिभिः कलिंगसेनया गोमुखादिभिश्च सह ग्रीष्मे अध्वगः ह्रदमिव तम् उपेयिवान्[१]। तत्र वत्सेशो देव्यौ च निजसुतं चिराद् ददृशिवांसः[२] तम् आलिङ्ग्य अमन्दानन्दं विविदिवांसः[३] समुच्छ्वलदूर्मिवात्सल्यसागरमिव विविशिवांसः[४] हर्षकण्टकितेषु अङ्गेषु प्रोतम् इव तम् मोक्तुं न शेकुः। ततो मिलितेषु तेषु सर्वेषु प्रवर्तमाने महोत्सवे सिद्धविद्याप्रभावतः सर्वम् अवगम्य मानसवेगस्य स्वसा नरवाहनदत्तस्य पत्नी वेगवती, व्योममार्गेण तत्र अवतीर्य निजपति-श्वश्रू-श्वशुरकृत पादानतिः नरवाहनदत्तं जगाद, 'भवदर्थं दुर्बलीभूताः सर्वाः विद्याः तपोवने साधयित्वा कल्याणिनः तव अन्तिकं पुनरहं प्राप्ता'। एतद् अभिधाय सा प्रभावत्यजिनावत्यौ सख्यौ अभिगत्य ताभ्याम् आश्लिष्टा यावत् ताभ्यां तत्र उपवेश्यते तावद् अजिनावत्याः माता धनवती अपि तैस्तैः विद्याधराधिपैः समाच्छादितव्योमतलैः इव तद्बलसहितैः तत्रैव आजगाम। ततः तस्याः सुतः महाभुजः, वीरः चण्डसिंहः, तद्बन्धुः मितगतिः, प्रभावत्याः पिता पिङ्गलगान्धारः, पूर्वप्रतिपन्नसभापतित्वः वायुपथः तथा स्वपुत्रेण वज्रप्रभेण सह राजा हेमप्रभः, स्वसुतया गन्धर्वदत्तया सहितो गन्धर्वराजः, चित्राङ्गदेन सहितः सागरदत्तः एते सर्वे तत्र उपगताः सपुत्रेण वत्सराजेन च सम्मानिताः यथोचितासनेषु उपाविशन्।

126. तत्र एवं सर्वेषूपविष्टेषु सत्सु राजा पिङ्गलगान्धारः सदसि तिष्ठन्तं[५] जामातरं नरवाहनदत्तम् उवाच, 'देवादिष्टं स्वचक्रवर्तिनं भवन्तम् अवलोकमाना[६] अतिस्नेहवशात् सर्वे वयम् इह समागताः। नियतव्रता, दिव्यज्ञानवती, दधाना अक्षसूत्रम्, वसाना कृष्णाजिनम्, त्वाम् अभिरक्षन्ती सर्वदा सावधाना वर्तते। विद्याधरोत्तमवन्दनीया, सिद्धविद्या सावित्री साक्षाद् भगवती इव इयं ते श्वश्रूः धनवती इति त्वदीयकार्यसिद्धौ न सन्देहः तथापि यत् अहं वच्मि तत् त्वम् आकर्णय—'अत्र हिमाचले विद्याधराणां स्थितेः द्वौ भागौ वर्तेते, उत्तरो दक्षिणश्च। कैलासात् अर्वाक् दक्षिणः, तत्परतश्च उत्तरः। तत्र एषः अमितगतिः उत्तरभागाधिपत्यार्थम् इदानीं तप-

---

१. 'उपेयिवाननाश्वाननूचानश्च'। २-४. 'विभाषागमहनविदविशाम्' 'दृशेश्च'। ५-६. 'लटः शतृशानचावप्रथमासमानाधिकरणे'।

सुदुश्चरतपाः परितोषितेन शङ्करेण उक्तः यत् चक्रवर्तिनरवाहनदत्तः तव समीहितं साधयिष्यति । अतः अयं तवान्तिकम् आयातः । इदानीं तत्रत्यसिंहासने समासीनः[१] । मन्दरदेवाख्यः दुर्मतिः मुख्यो राजा वर्तते । स च एवं बलवान् यत् अवाप्तविद्येनापि त्वया विजेतुम् अशक्यः । यस्तु दक्षिणभागे गौरिमुण्डः इति विश्रुतो राजा वर्तते सः अतिदुर्जयः दुरात्मा च । स च विविधमायाः विद्वुषो,[२] विदितस्य तव शत्रोः मानसवेगस्य परमः सुहृत् इति यावत् स न साधितः तावत् तव कार्यं न सेत्स्यति । अतः त्वम् अचिरेणैव सोत्कर्षं महाविद्याबलं साधय'। पिङ्गलगान्धारेण इत्थम् उक्तं धनवती अपि अनुमुमुदे इति विद्यासिद्ध्यर्थम् ईश्वराराधनार्थं च यथानिर्दिष्टं सिद्धक्षेत्रं गत्वा शङ्करप्रसादात् प्रकर्षावाप्तये च नरवाहनदत्तः समादिष्टः । एतस्मिन् एव प्रसङ्गे चित्राङ्गदः अब्रवीत्, 'देव, मिलिताः इमे सर्वे राजानः भवन्तम् अभिरक्षन्तीति सर्वेषाम् अग्रयायी एष विजयः क्रियताम्' ।

127. इत्थं तैः उक्तः, कृतनिश्चयो महाविद्याबलम् अर्जयिष्यन्[३] नरवाहनदत्तो विहितमाङ्गलिकक्रियः, अमितगतिप्रज्ञाकल्पिताम् उत्तमशिबिकाम् आरुह्य कल्पान्तपवनोद्भूतसागराम्भोनिभैः निजबलैः परिवृतः, नभः स्थगयन्, क्षणादेव गन्धर्वपतिविद्याधरेश्वरैः धनवत्या च सिद्धक्षेत्रपर्वतकम् आनीयत । तत्र च सिद्धैः आदिष्टव्रतः, तीर्थजलैः आत्मानं पवमानः[४], हविषा शिवं यजमानः, स्थण्डिलम् अधिशयानः, सर्वदा विविधान् भोगान् भुञ्जानः अपि इदानीं फलैः वृत्तिं कुर्वाणः, स्वानुभावेनैव च तपोविघ्नान् निघ्नानः,[५] व्योमचराधिपतिपरिवृतः सर्वथा तत्कृतरक्षो रक्षोभिरक्षोभितहृदयो दिवानिशम् अतन्द्रितः शङ्कराराधनाय कठिनम् अतपसीत् ।

128. एवं तपस्यन्तं तम् अवलोक्य मदनपरवशासु बहुदिव्यकन्यकासु, तदुपलब्धिविषयकं व्रतं च धारयन्तीषु, अकस्मात् तत्र तपोवने

---

१. आस्धातोः आत्मनेपदत्वात् शानचि, 'ईदासः' । २. विद् धातोः शतरि 'विदेः शतुर्वसुः' । ३. 'तौ सत्', 'लृटः सद्वा' । ४. 'पूङ् यजोः शानन्' । ५. 'ताच्छील्यवयोवचनशक्तिषु चानश्' ।

महोत्पाताः प्रादुरभूवन्। तथाहि—पतिष्यतां शूराणां गतिं बोधयन्निव उच्चैस्तमतरून् समुन्मूलयन् महारौद्रो वायुर्ववौ। किमत्र भवेदिति भयादिव भूमिः चकम्पे। भीतावकाशदानार्थमिव अद्रिसानवः अस्रंसिषत। हे विद्याधराः, अमुम् प्रभुं रक्षत! रक्षत!! इति वदद् इव नभस्तलम् अनभ्रं घोरघोषम् अकरोत्। किन्तु एवं भूतेऽप्युत्पातसम्भ्रमे नरवाहनदत्तः अर्हन्तं[1] भगवन्तं त्रिलोचनं ध्यायन् निष्कम्प इव तस्थौ। अनिष्टाशङ्किनो गन्धर्वराज-विद्याधराश्च सावधानाः सन्नद्धाश्च द्विषद्भ्यः[2] तम् अवन्तः अवस्थितवन्तः व्याधूतलतातीक्ष्णकोटिखड्गानि वनानि अहितागमशंसिनः उत्पातान् भर्त्सयन्ति इव सिंहनादान् मुमुचुः।

### मानसवेगयुद्धम्

129. अन्येद्युश्च अकस्मात् आकाशे कल्पान्ताम्बुदमेदुरं घोरनादं विद्याधरबलम् अदृश्यत। धनवती च तदानीं स्मृतनिजविद्याबलेन सर्वं विज्ञाय सुन्वद्भिः[3] जरद्भिश्च विजुगुप्स्यमानेन मानसवेगेन सह अयं गौरिमुण्डः समायातः इत्यभ्यधात्। तदानीम् उद्घूर्णविविधायुधान् सर्वान् विद्याधरान् प्रति मानसवेगेन सह गौरिमुण्डः अभ्यधावत्। क्वायं मानवः, क्व च वयं द्युचराः इति तद्गृह्याणां युष्माकं दर्पम् अहम् इह क्षणेनैव अपनेता[4] भवामि इति वादिनं तं निराकरिष्णुः[5] चित्राङ्गदः अपि क्रोधात् अभ्यद्रवत्। गन्धर्वाधीश्वरो राजा सागरदत्तः तथा प्रचण्ड-दोर्दण्डो वायुपथः पिङ्गलगान्धारश्च एते सर्वे विद्याधरेश्वरमहारथाः परतेजोऽसहिष्णवः सबलाः सिंहा इव अभिगर्जन्तः द्विषद्द्विपमनोभीतिं प्रजनिष्णवः समुन्मदिष्णुं मानसवेगम् अभ्यधावन् इति चित्राङ्गदादयः सैन्यरेणुघनाकीर्णे शस्त्रज्वालातडिल्लते, निपतदस्रगम्बुनि तस्मिन् घोरे समरदुर्दिने सञ्चरिष्णवः शोणितासवसम्पूर्णं प्रकीर्णशत्रुशिरोबलिं महायागम् इव चक्रुः। कबन्धमकरसङ्कीर्णाः वहदायुधपन्नगाः मिलन्मेदो-डिण्डीराः रुधिरापगाः प्रावर्तन्त। एवं प्रवृत्ते भयानकयुद्धे रथास्नुना[6] संहतसैन्येन गौरिमुण्डेन स्मृता पूर्वाराधनसम्प्रीता गौरी विद्या साक्षात्

---

१. 'अर्हः प्रशंसायाम्'। २. 'द्विषोऽमित्रे'। ३. 'सुञो यज्ञसंयोगे'। ४. 'तृन्'।
५. 'अलंकृञ्निराकृञ्०'। ६. 'ग्लाजिस्थश्च ग्स्नुः'।

त्रिनेत्रा त्रिशिखायुधा च आविर्भूष्णुः[१] जिष्णून् नरवाहनदत्तीयान् प्रवीरान् अमूमुहत् इति समुपलब्धबलो धृष्णुः[२] गौरिमुण्डः प्रधाव्य त्रस्नुं क्षिप्नुं नरवाहनदत्तं बाहुयुद्धाय आह्वयत् । द्वन्द्वयुद्धे च नरवाहनदत्त-बाहुविद्धः, अक्षमी[३] मायावी, तमी, गौरिमुण्डः स्मृतनिजविद्याबलेन तं हन्तुं बाहुभ्याम् आदाय खम् उदयौ । किन्तु धनवतीविद्याबलान्वितं नरवाहनदत्तं हन्तुम् अशक्नुवन् उन्मादी सः अग्निपर्वते तं चिक्षेप । द्वेषी मानसवेगः अपि च निजद्रोहिणः अभ्याघातिनश्च तत्सखान् गोमुखादीन् आदाय विकाषी[४] खम् उत्पतिष्णुः अनास्थया दिक्षु प्रास्थित । एवम् उत्क्षिप्ताः ते धनवतीप्रयुक्तया रूपिण्या विद्यया अवतारिताः पृथक् पृथक् भूमौ स्थापिताः; 'विवेकिनं सिद्धकार्यं, विलापिणम्, शत्रुप्रमाथिनम्,[५] प्रसारियशस्कं च निजप्रभुं कुशलिनं भवन्तः शीघ्रं प्राप्स्यथ' एवमुक्त्वा तिरोदधत्या च तया भृशम् आश्वासिताः । एतेन अस्माभिः जितम् इति विकत्थी समानसवेगो गौरिमुण्डः यथागतं तस्मात् रणात् स्वगृहान् अगात् । 'नरवाहनदत्तः सिद्धकार्यः शीघ्रं समेष्यति, न च तस्य किमप्य-निष्टं भावि' इति धनवत्या अभ्युदीरिते सति विस्रम्भिणः ते चित्राङ्गदादयः अपि स्वानि स्थानानि जग्मुः । धनवती अपि स्वसुताम् अजिनावतीम् सपत्नीभिः सहिताम् आदाय स्वगृहं ययौ ।

**130.** ततः अभ्यसूयकः विलासी च मानसवेगः मदनमञ्चुकाम् आगत्य प्रललाप—'तव पतिः युद्धे हतः इति इदानीम् अहमेव तव गतिः अतः त्वं मां भज' । एवमुक्ता सा तत्पुरस्थायिनी अपि तत्परिवादिका[६] हसन्ती इत्थमुवाच, 'सत्स्वपि तस्य निन्दकेषु सुरसुरक्षितस्य तस्य हिंसको[७] न कोऽपि समुदपद्यतेति नूनं स एव युष्माकं विनाशक[८] इति' ।

*नरवाहनदत्तस्य सहायकावाप्तिः*

**131.** इतः नरवाहनदत्तं, तच्छत्रुणा अग्निपर्वते क्षिप्यमाणं कश्चिद् दिव्यः पुमान् अन्तरीक्ष एव अग्रहीत्; रक्षित्वा च तं मन्दाकिनीतटं निनाय ।

---

१. 'ग्लाजी'तिसूत्रे चकाराद् भवतेः ग्स्नुः । २. 'त्रसिगृधिधृषिक्षिपेः क्नुः' । ३. 'शमित्यष्टाभ्यो घिणुन्' । ४. 'वौ कषलसकत्थस्रम्भः' । ५. 'प्रे लपसृद्रुमथवदवसः' । ६-८. 'निन्दहिंस'—इत्यादिना वुञ् ।

तत्र स नरवाहनदत्तेन 'को भवान्' इति पृष्टो जगाद, 'देव, भवेन भवतो रक्षणार्थम् इह प्रेषितः अमृतप्रभनामा अहं विद्याधराधिपः । तव अग्रे च अयं तन्निवासः कैलासाद्रिः । अत्र त्वं शिवं समाराध्य शिवं समवाप्स्यसि, अतः एहि, तत्र त्वां नयामि' । एवमुक्त्वा तत्क्षणमेव तं तत्र प्रापय्य, तम् आमन्त्र्य च यथागतम् अगमत् । सम्प्राप्तकैलासो नरवाहनदत्तोऽपि च तत्र अग्रस्थं गणपतिं तपसा सन्तोष्य तेन अभ्यनुज्ञातः गिरिजापतेः आश्रमं प्रविश्य नियमक्षामः द्वारस्थं नन्दिनं ददर्श । कृतप्रदक्षिणं चैनं स्वकीयोक्त्या नन्दी इत्थम् अभ्यनन्दयत्, 'सिद्धकल्पस्त्वमिदानीं सञ्जातः । अधुना ते विघ्नाः प्रशान्ताः इति इहस्थः त्वम् आभगवत्तोषणात् तपस्यां कुरु' । नन्दिना इत्थम् उक्तः नरवाहनदत्तः देवं शङ्करं देवीं पार्वतीं च ध्यायन् अनिलाशनः उग्रं तपश्चचार । तेन अतितुष्टो भगवान् भव-भगवत्या पार्वत्या सह दत्तदर्शनः प्रह्वं तम् एवम् आदिशत्, 'वत्स, प्रीतोऽस्मि ते । सर्वविद्याधराणां चक्रवर्ती, निजाक्रोशक[1]कदर्यकम्पनः[2], निजानुजीविजनानन्दवर्धनश्च[3] त्वम् अधुना एधि । सर्वातिशायिन्यः सर्वाः विद्याः विद्यागर्धनस्य विद्याधरमण्डनस्य च ते प्रादुःष्युः । अस्मत्प्रभावात् शत्रूणां दमायिता निषूदिता[4] च भूयाः । शत्रुशस्त्रैः अच्छेद्यः अभेद्यश्च त्वं रणे चङ्क्रमणान् स्थायुकांश्च[5] अखिलान् घातकरिपून् घातुको[6] भव । शत्रुशक्तिसम्पत्तिलुण्टाके[7] त्वयि दृष्टे निर्जीजःप्रजल्पाकाः[8] कापुरुषकुट्टाकाः[9] वराकाः[10] शत्रवः, त्वच्छरणभिक्षाकाः[11] भवन्तु । अव्यथिनो जयिनश्च ते विपक्षिणां क्षयिण्यो विद्याः न तव ईक्षिष्यन्ते गौरी विद्या चापि त्वदायत्ता भविष्यति' । गौर्या सह तस्मै इत्थं वरं दत्वा ब्रह्मनिर्मितं प्रजाविनं[12] चक्रवर्तिमहापद्मविमानम्, दयालुः, निज-भक्तजनकृपालुः, हरः, विजयस्पृहयालवे श्रद्धालवे तस्मै प्रददे । ततः

---

१. 'देविक्रुशोश्चोपसर्गे' । २. 'चलनशब्दार्थादकर्मकाद् युच्' । ३. 'अनुदात्तेतश्च हलादेः' । ४. 'सूददीपदीक्षश्च' । ५-६. 'लषपतपदस्था०' इत्यादिना उकञ् । ७-११. 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' । १२. 'प्रजोरिनिः' ।

'किम् आदिशसि इति तदाज्ञागृहयालवः इव सविग्रहाः सर्वाः विद्याः तस्य आविरभूवन् ।

132. इत्थं नरवाहनदत्तो लब्धसिद्धिधरः, निजविजयनिःसंशयालुः[१], पार्वतीपरमेश्वरौ प्रणम्य, तदभ्यनुज्ञातो, दिव्यं पद्मविमानम् अधिरुह्य, सिद्धचारणोद्गीतामितगीतः, प्रथमम् अमितगतेः वक्रपुरसंज्ञं पुरम् आगतवान् इति तत्र सद्रुः[२] अमरगतिः, तं स्वनिवेशं सन्निवेश्य, कृतातिथ्याय वर्णितनिजसिद्धये च तस्मै कृतप्रणतिः, अदारुः अपि नरवाहनदत्तोपायनीकृतसुलोचनाख्यस्वसुतो दारुताम् अन्वभवत् । नरवाहनदत्तोऽपि च अपरविद्याधरलक्ष्मीम् इव, प्रेमपाशसेरुं ताम् अवाप्य मधुधारुः, तद् अहः तत्रैवानैषीत् ।

133. अपरेद्युः वक्रपुरीयास्थानवर्तिनं नूतनचक्रवर्तिनं नरवाहनदत्तम् अम्बरतलाद् अवतीर्य आस्मरः[३] भासुर[४]कार्तस्वरसवर्णोष्णीषपरिवेष्टितशिरोभागः, अभङ्गुर[५]मेदुरवेत्रकरः विदुर इव राजकुलनीतिविदुरः एकः पुमान् बद्धाञ्जलिः एवं व्यजिज्ञपत्, 'देव, अहं क्रमागतः पौरुचिदेवाख्यः, चक्रवर्तिप्रतीहारः, जित्वरस्य[६] श्रीमतः सेवार्थम् इह आगत्वरः[७] । एतदाकर्ण्य सर्वकर्तव्यजागरूको[८] नरवाहनदत्तः अमितगतेः मुखम् अभ्यैक्षत् । तेन, च, 'देव सत्यम् एतत्, इति विज्ञप्तः तं स्वक्षत्तृत्वे न्ययोजयत् ।

134. अथ विद्याप्रभावतः सर्ववृत्तम् आकलय्य वेगवत्यादिभिः तत्पत्नीभिः सह धनवती, निजौदार्यसन्तोषितागणितयायजूकः[९], स्वानुभावापचारितनिजदुर्हृद्दंदशूकः, तत्सुतः चण्डसिंहश्च, दीप्र[१०]प्रभावोऽपि विनम्रः वायुपथान्वितो राजा पिङ्गलगान्धारः, क्रमेण सागरदत्तेन स्मेराननहेमप्रभादिभिश्च सह चित्राङ्गदः एते सर्वे समागत्य चक्रवर्तिनः तस्य पादयोः

---

१. 'शीङो वाच्यः' । २. 'दाधेट्सिशदसदो रुः' । ३. 'सृघस्यदः क्मरच्' । ४-५. भञ्जभासमिदो घुरच्' । ६. 'इण्नशजिसर्तिभ्यः क्वरप्' । ७. 'गत्वरश्च' । ८. 'जागरूकः' । ९. 'यजजपदशां यङः' । १०. 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' ।

निपेतुः। सोऽपि च श्वश्रूगौरवाद् धनवत्याः चरणौ प्रणत्य समागतसर्व-शुभाशंसुः[1] स्वागतेन सर्वान् सम्मानयामास । धनवती चापि जामातृ-शुभोदर्कम् इच्छुः आशीर्भिः तम् अवर्द्धयत्। ततो विज्ञापितात्मसिद्धि-वृत्तान्ताः ते चण्डसिंहादयः सर्वे नितरां प्रमुमुदिरे। पार्श्वोपसर्पितपत्नी-केन चक्रवर्तिना च 'मदीयाः ते सचिवाः क्व वर्तन्ते' इति पृष्टा धनवती-'मानसवेगेन क्षिप्ताः ते मया संरक्ष्य विद्याप्रभावेण पृथक् पृथक् स्थापिताः' इत्यभिदधिः[2] तं पर्यतोषयत्। ततो वत्सेशसुतो रूपिणीं विद्याम् आदिश्य तान् सर्वान् आनाययत् । तत्र समाजग्मीन्[3] पृष्टकुशलान् पादानेमींश्च तान् सर्वान् 'विभिन्नपरिस्थितिपापतिभिः[4], अगणितसुखदुःखसासहिभिः भवद्भिः इयन्तो दिवसाः क्व अतिवाहिता' इत्येकैकं पृच्छन् वक्तुं चादिक्षत् इति सर्वेषु तेषु गोमुख आदावेवं स्वकथाम् संक्षेपेण उपावर्णयत्—

135. देव, तदानीं द्विषा मानसवेगेन क्षिप्तं मां कापि देवी हस्तयोः गृहीत्वा समाश्वास्य च दूरे अरण्ये स्थापयन्ती तिरोदधे। तत्र अतिदुःखितः अहं आपातत तृष्णक्[5], प्रपाततः स्वदेहं परित्यक्तुं धृष्णक् अभवम्। तच्च अवलोक्य कोऽपि तापसः तदानीमुपेत्य 'गोमुख, मैवम्! सिद्धार्थं वन्दारु[6], जनमन्दारं स्वप्रभुं त्वं पुनर्द्रक्ष्यसि' इत्युक्त्वा मां पतनात् न्यवारयत्। 'कस्त्वं कथं च तत् वेत्सि'? इति पृष्टश्च स शिवक्षेत्रं स्वकीयाश्रमं नीत्वा कृतातिथ्यो माम् अब्रवीत्—'अहं कुण्डिनाख्यपुरीयः नागस्वामी नामा द्विजः पितरि स्वर्गते ततः पाटलिपुत्रकं गत्वा विद्योपादानार्थं जयदत्तम् उपाध्यायम् उपासदम्। किन्तु शिक्ष्यमाणः अपि यदा अहम् अक्षरमपि न अविदं तदा सर्वे छात्राः माम् उपाहसन् इत्यवमानग्रस्तः अहं विन्ध्यवासिनीं प्रस्थितः मध्येमार्गं वक्रोलकाभिधं पुरं प्रापम्। तत्र च भिक्षार्थं प्रविष्टाय मह्यम् एका गृहिणी अवोचत् यत् 'त्वदीयं जीवनमिदानीम् अतिसङ्कटे वर्तते। अतो जीवितं चेत् त्वम् इच्छसि तदा अस्माद् अष्टादशयोजन्याम् सन्ध्यावासा-ख्यस्य ग्रामस्यानतिदूरे निर्जने प्रदेशे एकस्मिन् मन्दिरे सुमित्राख्या एका शप्ता

१. 'सनाशंसभिक्ष उः'। २-३. 'आदृगमहनजनः'। ४. 'सासहिवावहि०'।
५. 'स्वपितृषोर्नजिङ्'। ६. 'शृवन्द्योरारुः'।

यक्षिणी वर्तते, मानुषः सङ्गश्च तस्याः शापशान्तये निर्दिष्टः। येन केनापि प्रकारेण तदन्तिकं त्वं भज'। इत्थं तया उक्तः अहं ततोऽनुप्रस्थितः। किन्तु अध्वनो दैर्घ्यात् सन्ध्यावासम् अनवाप्तस्यैव मे मध्येऽध्वं सूर्योऽस्तंगतः इति एकस्मिन् वने शयानं मां बह्व्यो योगिन्यः, अकस्मात् कुतश्चिदागताः, समुत्क्षिप्य यावद् विद्युद्गत्या विहायसा गच्छन्ति तावदेव तासां पुरः अन्याः योगिन्यः परापतन् इति ताभिः सह तासां सम्प्रवृत्ते भयानकयुद्धे तासां हस्तात् अहम् एकस्मिन् अतिघने निर्जने वने पतितः। अपश्यञ्च तत्र अपावृत-द्वारेण 'प्रविश' इति अन्तःप्रवेशं ददद् इव महामन्दिरम् एकम्। भीलुकः[1] अहं शरणार्थं तत्र प्रविष्टः नारीशतसमावृताम् अद्भुताकाराम् प्रभया प्रदीपप्रज्वलितां भास्वरां[2] महौषधिमिव विपन्नरक्षणेश्वरीम् सुश्रियम् एकां नारीम् अद्राक्षम्। समाश्वस्तेन च मया क्षणात् पृष्टा सा अभाषत—'अहं सुमित्राख्या यक्षिणी शापात् एवमिह स्थिता वर्ते। मदीयशापशान्तये च मानुषः सङ्गः समादिष्टः इत्यवसरप्राप्तः त्वं निःशङ्कं मां भजस्व' इति एवम् उक्त्वा सा क्षिप्रं मां समुपावेश्य आज्ञापिताभिः दासीभिः वस्त्राहारपानैः उपाचार-यदिति तया यक्षिण्या सहं ससुखं कतिचिद्दिनानि तत्राहमासम्।

136. एकदा सा स्वैरं माम् इत्थम् अब्रवीत्—इदानीं क्षीण-शापा अहम् इतो गच्छामि। मत्प्रसादाच्च त्वं समवाप्तदिव्यज्ञानः, प्रधीः, सिद्धयोगो, निर्भयः, तपस्वी भविष्यसि। किन्तु इहस्थः त्वं मध्यमं खण्डम् अस्य मन्दिरस्य मा द्राक्षीः'। एवमुक्त्वा तिरोहितायां तस्यां समुत्पन्नकौतुकोऽहं मध्यमं खण्डमारूढः तत्र तुरङ्गमम् एकम् अदर्शम्। किन्तु यावदेव अहं तदन्तिकमुपगतः तावदेव तदश्वखुराभ्या-हतः क्षणादस्मिन् शिवालये स्थितम् आत्मानम् आप्नवम्। ततः प्रभृत्यत्रैव स्थितः अहं क्रमात् सिद्धिं गतः इति मनुष्यस्यापि मे जगतः त्रिकालज्ञानं वर्तते। सिद्धयस्तु सर्वस्यापि क्लेशबहुलास्तथापि त्वम् इह आस्स्व सर्वप्रतिभूः विभुः[3] शम्भुः तवापि अभीष्टसिद्धिं विधास्यति' इति।

137. तापसेन इत्थम् उक्तः अहम् त्वत्पादप्राप्तिसञ्जातास्थः तदाश्रमे

१. 'भियः क्रुक्लुकनौ'। २. 'स्थेशभासपिसकसो वरच्'। ३. 'विप्र-शम्भ्यो ड्वसंज्ञायाम्'।

एतावन्ति दिनानि अनैषम् । स्वप्ननिर्दिष्टभावत्कसिद्धिश्च अद्य धात्र्या[1] इव कयाचिद् दिव्यया स्त्रिया गृहीत्वा अहमिहानीतः, इत्येष देव, मदीयो वृत्तान्तः ।

138. एवम् उक्त्वा तूष्णीकामासीने गोमुखे नरवाहनदत्तस्य अग्रे मरुभूतिरवोचत्—'मानसवेगेन तदानीं क्षिप्तं मां कापि देवता निजपाणिभ्याम् आदाय दूरे चाटव्यां प्रक्षिप्य तिरोऽभवत् । अतिदुःखार्त्तः अहं तत्र मरणोपायचिन्तया भ्राम्यन् नदीपरिक्षिप्तम् एकम् आश्रमम् अवलोकितवान् । तत्र गत्वा तं प्रविश्य अहं शिलातले समुपविष्टं ज्वलन्नेत्रम्, जटालम्, एकं तापसमवलोक्य तम् उपगतः कृतनतिः, विहिततत्स्तोत्रः[2] 'कस्त्वम्, कथं च इमाम् अमानुषीं भूमिं दिव्यपत्ररहितः अभ्यायातः' एवं तेन पृष्टः सर्वं तस्मै अवर्णयम् । तदाकर्ण्य 'सुधीः सः त्वं मा आत्मानम् अधीरः अधीः इव वधीः । प्रभोर्वार्तां त्वं ज्ञास्यसि । ततः परं यत्कर्त्तुं क्षमं स्यात् तत्त्वया करणीयम्' इत्युवाच । इत्थं भावत्कवार्ताजिज्ञासया तत्र मयि स्थिते तां नदीं स्नातुं दिव्याः स्त्रियः समाजग्मुरिति तापसो माम् अवदत् यत् 'तासां स्नान्त्याः अन्यतमस्याः तटस्थापितवस्त्रमानय । ततः त्वं प्रभोर्वार्तां ज्ञास्यसि' । तच्छ्रुत्वा अहं तथैव अकार्षम् । हृतवासना च सा शरीरविषक्तोन्नवसना माम् अन्वगात् । 'नरवाहनदत्तस्य वार्तामाख्याय निजवाससी गृहाण' इति तापसेनोक्ता च अवोचत्—'नरवाहनदत्तो ह्यद्य हरमाराधयन् कैलासपर्वते वर्तते । कतिपयैरेव च दिवसैः स विद्याधरसम्राट् भविष्यति' इत्थं तत्कथासंस्तवात् सा वनिता विमुक्तशापा दिव्या भार्या समपद्यत । तया साकं च स तापसस्तस्थौ । अहमपि च चिन्ताधुवित्रतत्कथनसञ्जातत्वत्समागमास्थः तत्रैव न्यवसम् ।

139. कतिपयदिवसेषु गतेषु सगर्भा सा दिव्या स्त्री भ्रूणं प्रसूय तापसम् अवोचत्—'आर्य तव संगमेन मम शापः शान्तः । पुनरपि मत्प्रेप्सा चेत् तदा तण्डुलैः सह एतत् मम गर्भं प्रपच्य श्मशाने समश्नान । एवम् उक्त्वा प्रयातायां तस्यां स तापसः सतण्डुलं तद्गर्भं पक्त्वा भक्षयित्वा च खम्

१. 'धः कर्मणि ष्ट्रन्' । २. 'दाम्नीशस्'० इत्यादिना ष्ट्रन् 'तितुत्रथे'ति इडभावः ।

उत्पत्य एनाम् अन्वगात् । अहमपि च सर्वदुर्लालित्यलचित्रं[1] स्वस्तिसवित्रं पवित्रं[2] सिद्धसिक्थं तद् विज्ञाय पाकभाण्डात् भक्तसिक्थद्वयमभक्षयम् इति यत्र अहमष्ठीवम् तत्रैव काञ्चनं समजायत । एवं कुर्वन् अहं भ्राम्यन् एकं पुरं प्रापम् । तत्र च वेश्यागृहे निवसतो मे एका कुट्टनी छलाद् वमनं कारितवती इति वमतो मे मुखाद् भास्वत्पद्मरागनिभे उभे प्राग्भुक्तसिक्थे निरगच्छताम् । निर्गते एव च ते उभे सिक्थे तया कुट्टन्या उपात्ते भक्षिते चेत्येतेन नष्टां मदीयां हेमसिद्धिं सा कुट्टनी अगृह्णात् । तेन अतिग्लानः अप्यहं सर्वं तच्च-न्द्रार्धशिखरस्य शिवस्य विधानम् अवधार्य अपारस्य अकूपारस्य इव संसा-रस्य अस्य अपरिमितं बहुच्छलत्वञ्च अवधार्य विचार्य अतिखिन्नः त्वत्प्रा-प्तये तपसा देवीम् आराधयितुं चण्डिकागृहम् आगच्छम् । त्रिरात्रोपोषितं च सा देवी स्वप्ने माम् आदिशत् यत्त्वदीयः स्वामी सिद्धकामः समजायत । अतः गत्वा त्वं तमवलोकय । तदाकर्ण्य प्रबुद्धः अहं प्रातः कयाचिद् देव्या त्वत्पादमूलम् इहानीतः । एतावती, देव, मदीया कथा' ।

[पूर्वकृदन्तसमाप्तिः]

[*उत्तरकृत्प्रत्ययाः*]

140. इत्थं कुट्टनीविडम्बनरूपं साधोः मरुभूतेः वृत्तमाकर्ण्य शत्रु-तरून्मूलनवायूर्जस्वलो नरवाहनदत्तः स्वकीयैः पार्श्वगैः सह जहास । हरि-शिखश्च ततः इत्थमात्मीयां कथां वक्तुमारभत—'भीष्मेण शत्रुणा मानसवेगेन तथा प्रास्तं मामेका देवता समादाय उज्जयिन्यामेकत्र सुरक्षितं न्यधात् । तत्र च अहम् अतिदुःखितः निशागमे स्वदेहं त्यक्तु[3]मिच्छन् श्मशाने काष्ठैः चिता-मारचयम् । तत्र अग्निं प्रज्वाल्य पूजयन्तं माम्, अगामिनम्[4] अप्यर्थं ज्ञातुं, पर्याप्तः तालजङ्घ नामा भूताधिपतिः अभ्यधात्, 'मा वह्निं प्रवेष्टुं धृष्णुहि । नैष समयस्ते मर्त्तुम् । तव प्रभुरद्यापि प्राणिति अतः पूर्णसिद्धिकामं तं दर्शकः त्वं नूनं प्राणान् धारय' इति तेनेत्थं मरणान्निवारितः अहं तव संयोगाय देवाग्रे तपस्यन् स्थितः कयाचिद्देवतया इहानीतः' ।

---

१. 'अतिलूधुसूखनसहचर इत्रः' । २. 'पुवः संज्ञायाम्' । ३. 'समान-कर्तृकेषु तुमुन्' । ४. 'भविष्यति गम्यादयः' ।

**141.** हरिशिखेन इत्थमात्मकथायाम् उक्तायाम् अन्यैरपि च उपवर्णितेषु क्रमात् आत्मवृत्तान्तेषु नरवाहनदत्तोऽमितमतेर्गिरा धनवतीं प्रेर्य तेभ्यः सर्वेभ्यः स्वसचिवेभ्यः सर्वाः विद्याः अदीदपदिति तेषु सर्वेष्वपि विद्याधरीभूतेषु 'अधुना स्वशत्रून् पराजित्य अस्माकं प्रमोददायो[1] भव' एवं शुभे अहनि धनवत्या उक्तः नरवाहनदत्तः शिरोरोगम्[2] इव शत्रुसारं[3] सद्यः अपसारयितुम् गोविन्दकूटाख्यं गौरिमुण्डपुरं प्रति स्वबलप्रयाणारम्भम् आदिशत् । अतः स्फारीभवच्छन्नार्कविद्याधरबलम् अकालोदितशत्रुविनाशकधूमकेतुनीकाशम् आकाशे समदृश्यत । नरवाहनदत्तोऽपि च शत्रुसद्वाहनस्यदोपशम-शालिनीं स्वकीयकरेणुकाम् आरुह्य सर्वाश्च स्वभार्याः वह्येषु समारोह्य चण्डसिंहादिकेषु च पुरःसरेषु नभसा विजयाय प्रतिष्ठमानः अध्वानि धनवतीनिकेतम् आसाद्य स्वीकृततदर्चः मातङ्गपुरात् आह्वाह्वाय विद्याधरेशयोः गौरिमुण्डमानसवेगयोः एकं दूतं व्यसर्जयत् । अन्येद्युश्च सर्वान् दारान् मातङ्गपुरे संस्थाप्य दिव्यैः राजभिः सह गोविन्दकूटं सम्यगभ्यषेणयत् । तत्र च प्रतिभटक्रोधैधाय[4] निर्गतौ गौरिमुण्डमानसवेगकौ, अग्रतः चण्डसिंहादयः प्रत्यगृह्णन् । प्रवृत्ते च उभयतः सङ्गररागरक्ते सङ्ग्रामे, पतत्सुभटपादपः, स्रवद्रुधिरनिर्झरः सः गोविन्दकूटाद्रिः शुशुभे । शूराणां जीवनानाम् अन्तरः आहवकालः रक्तावोद[5]विलसत्खड्गलताजिह्वो जृम्भते स्म इति रणे एकदुर्जननिचायम् इव सम्मुखागतं मानसवेगं स्वयमेव युद्धविद्योपाध्यायो[6] नरवाहनदत्तः अभ्युत्पत्य तत्क्षणमेव च भग्नशिरस्त्राणं केशेषु समाकृष्य पाप्मनः तस्य अकृतनीशारं शिरः असिना चिच्छेद । । तत् दृष्ट्वा प्रकुपितम् उच्चैःकृतसंरावम् प्रधावितं च गौरिमुण्डं केशेषु आकृष्य गृहीततदङ्घ्रियुग्मः अभ्रे भ्रामयित्वा शिलायां पातयन् अनुबन्धम् इव तम् अभिनिष्ठानताम् अनयत् ।

*मदनमञ्चुकावाप्तिः*

**142.** एवं गौरिमुण्डमानसवेगयोः, हतयोः, आश्रितसंद्रावे[7] च शेषे

---

१. 'अण् कर्मणि च' । २. 'पदरुजविशस्पृशो घञ्' । ३. 'सृस्थिरे' । ४-५. 'अवोदैधौद्मप्रश्रथहिमश्रथाः' । ६. 'इङश्च' । ७. 'समि युद्रुदुवः' ।

भीते तद्बले, गगनस्थाः सर्वे सुराः साधु ! साधु !! इति ब्रुवन्तः विद्याधर-श्रायस्य[1] चक्रवर्तिनः तस्य उपरि पुष्पवृष्टिं च कुर्वन्तः निजसम्मदभावं प्रकटीकृतवन्तः । इत्थं निजविजयविश्राव[2]गौरवम् अनुभवन् नरवाहनदत्तः तैः तैः स्वकीयोन्नायसहायकनृपतिभिः सह तत्प्रस्तावेन[3] कृताभिलावस्य[4] गौरिमुण्डस्य राजधानीं प्रविश्य तत्सम्बन्धानां विद्याधराधीशानां प्रणति-पूर्णहृदयसौजन्योद्गारं[5] भृशं शंसन् अनभीष्टोत्कार[6]रत्नोत्करपरिग्रहः पुष्पनिकरकराणां तेषां पूजोपहारं प्रतिपन्नवान् ।

143. अथ निहतसकलसपत्नराज्यावाप्तिकृतसमुत्सवे नानादिग्देश-समागतागणितविद्याधरोद्गीयमानं निजविजययशः, संस्तावे छन्दोगकृत-संस्तावम् इव शृण्वन्तं तं सम्राजं धनवती समुपेत्य, 'देव' गौरिमुण्डस्य गन्धर्वविद्याकृतापूर्वसंस्तवा, त्रैलोक्यसुन्दरी आत्मनिकानाम्नी कन्या अस्ति तां त्वम् उपयच्छस्व' । एवमुक्तो राजा तां तत्रानाय्य तस्मिन्नेव अहनि ताम् उपयेमे, प्रातश्च वेगवतीं प्रभावत्यौ सम्प्रेष्य आषाढपुरात् मदनमञ्चुकाम् आनाययदिति तत्रानीता सा निजपरिभावकमानसवेगवधोत्पन्नहर्षनिर्भर-मानसा शूरं स्वपतिं विरहान्ते सम्प्राप्य अनिर्वचनीयं सम्मदम् अन्वभवत् । नरवाहनदत्तोऽपि च चिरोत्सुकः तस्य सर्वाः विद्या दत्त्वा प्रभावतीं सम्प्रेष्य भगीरथयशसमपि आनाय्य गौरिमुण्डपुरोद्यानवर्त्ती सर्वाभि-र्भार्याभिः सह कृतपानादिविविधलीलाप्रस्तारः[7] चिरं चिक्रीड ।

*मन्दरदेवपराजयः*

144. एकदा आस्थानवर्तिनं चक्रवर्तिनं द्वौ विद्याधरचारौ समा-गत्य विज्ञप्तवन्तौ यद् देव आवाम् इतः धनवतीगिरा देवमाय महावीर-सुररक्षितद्वारदेशायाम् त्रिशीर्षाख्यगुहायां स्थितस्य मन्दरदेवस्य विस्तारभाजं[8] चेष्टां ज्ञातुं गतौ अभूव । तत्र च आस्थानगतः अनुभूयमान-

---

१. 'श्रिणीभुवोऽनुपसर्गे' । २. 'वौ क्षुश्रुवः' । ३. 'प्रे द्रुस्तुस्रुवः' । ४. 'निरभ्यो पूल्वोः' । ५. 'उन्न्योर्ग्रः' । ६. 'कृ धान्ये' । ७. 'प्रे स्त्रोऽयज्ञे' । ८. 'प्रथने वावशब्दे' ।

विद्याधरैश्वर्योद्ग्राहः[1], छन्नकायाभ्याम् आवाभ्याम् एवं स ब्रुवन् आकर्णितः यत् नरवाहनदत्तेन विद्याधरश्रीसङ्ग्राहं[2] कृत्वा गौरिमुण्डादयः सर्वे परिणायेन शाराः इव पर्य्यायेण निहताः इत्यस्माभिः उद्भवन् अरिः अयं नोपेक्ष्यः, एषोऽत्र न्यायः । तदाकर्ण्य दिने तत्रच्छन्नौ इतस्ततः अटन्तौ कृतनिशोपशायौ[3] च सर्वथा अनुमिततच्चिकीर्षौ आवाम् इह देवं विज्ञापयितुम् आगतवन्तौ ।

145. द्विषन्निकायागतचारमुखात् एतद् आकर्ण्य कोपाकुलीभूता नरवाहनदत्तसभा अनिलाहता पद्मिनी इव संजाता । चित्राङ्गदस्य बाहू निजवलयनिस्वनैः स्वप्रभोः युद्धादेशम् इव अमार्गयताम् । क्रुधा श्वसतः अमितगतेः वक्षसि समुत्फलन् हारः 'वीर, उत्तिष्ठ, उत्तिष्ठ' इति वदन्निव प्रतिबभौ । करेण सशब्दकं भूमिं ताडयन् पिङ्गलगान्धारो वैरिनिकायचूर्णनोपक्रमम् इव व्यधित । वायुपथस्य कोपेन आरोपिता चापलता इव विद्विषाम् अन्ताय भ्रुवोः पदम् आदधे । सङ्क्रुद्धः चण्डसिंहः पाणिना पाणिं सम्मर्दयन् 'एवम् अहं शत्रून् निर्मिमन्थिषामि' इत्यभिदधान इव अलक्ष्यत । सागरदत्तस्य बाहुः व्योम्नि मूर्छता हस्तास्फालनजन्यशब्देन रिपुम् आह्वयत इव । नरवाहनदत्तस्तु कोपाविष्टोऽपि प्रकृतिस्थ एव अनाकुलः तिष्ठन् अक्षोभ्यता एव महतां महत्त्वलक्षणम्' इति सूचयन् शत्रुं जेतुं यात्रायै निश्चिन्वानः सचिवान्वितः भार्याभिः सह विमानम् आरुह्य गोविन्दकूटतः प्रतस्थे । सर्वे गन्धर्वराजविद्याधराधिपाः अपि चैनं चन्द्रं ग्रहा इव परिवार्य सह जग्मुरिति धनवत्यां पुरःसरन्त्यां नरवाहनदत्तो हिमाचलमासाद्य सितपद्मोच्छ्रितच्छत्रं, समुल्लसद्धंसचामरं, सम्राडुपयुक्तम् उपायनम् इव आदाय समुपस्थितं महासर एकं प्रापत् । तत्र, 'चक्रवर्तिन्, भवता अस्मिन् सरसि स्नातव्यम्' इति वायुपथेन उक्तः तत्र स्नातुम् अवातरत् । तदानीं दिव्या वाग् उद्भूय इत्थम् असूचयत् यत् अस्मिन् सरसि अचक्रवर्तिनः स्नानं न सिद्ध्यति अतः अद्य प्रभृति त्वदीयं चक्रवर्त्तित्वं सिद्धं सञ्जातम् । तदाकर्ण्य जलाभ्यन्तरे प्रविष्टश्चक्रवर्ती धौताञ्जनारुणदृशः, शिथिलितकेश-

१. 'उदि ग्रहः' । २. 'समि मुष्टौ' । ३. 'व्युपयोः शेतेः पर्याये' ।

पाशाः अङ्गसंसक्तार्द्रवाससश्च प्रियाः पश्यन् अन्तःपुरैः सह अम्बुधौ पाथस्पतिरिव चिक्रीड ।

**146.** अन्येद्युश्च प्रातः विमानस्थः ततः सबलः प्रस्थाय मार्गे वायुपथस्य पुरमवाप, तदनुरोधेन च तं वासरं तत्रैव निनाय । अपरेद्युश्च स तत्पुरीयोद्यानादिविहारार्थं गतो हेमसिकतिलसरित्तटोद्यानविहारिणीं सौम्यसंलापमनोहारिणीं वायुवेगयशोनाम्नीं वायुपथस्वसारम् अपश्यत् । सापि च तत्रागतं तं वीक्ष्य तदारक्तचित्तेन व्यावस्मार्यो[1] समाश्रित्य तस्माद् अन्तर्दधे इति संलक्षितविलक्षो नरवाहनदत्तः तां हेत्वन्तरपराङ्मुखीं मत्वा निजावासमागतवान् । एकदा वायुपथः तमेकान्ते नीत्वा जगाद यत् वायुवेगयशोनामा मदीया भगिनी कुमारी वर्तते सा च सिद्धैः इत्थम् उक्ता यद् इयं चक्रवर्तिनः पत्नी भाविनी । अतः प्राभृतरूपाम् इमामहं तुभ्यं दातुम् इच्छामि इति तद्ग्रहणेन माम् अनुगृहाण इति । एवमुक्तस्तथेति प्रतिपन्नो राजपुत्रो वायुपथेन दत्ताम् अनिच्छन्तीमपि तदनुजां स्वीचकार । तदानीं विवाह्यमाना सा अवोचत्, 'अकामयमाना अप्यहं भ्रात्रा मदीयेन दीये इति मदीये अस्मिन् कर्मणि लोकपालाः यूयं साक्षिणः इति । एवं निगदन्त्याश्च तस्याः तद्वचः, वर्तमाने तत्रत्ये वायुपथान्तःपुराङ्गनासांराविणे[2] अन्यः कोऽपि न शुश्राव । गोमुखश्च किन्तु तच्छ्रुत्वा तद्वाक्याशयं बुभुत्सुः इतस्ततः अभ्रमत् इत्येकान्ते अग्निप्रवेशं कर्तुम् उद्यताः चतस्रो विद्याधरकुमारिकाः ददर्श । तेन तथाकरणस्य कारणं पृष्टाश्च ताः वायुवेगयशःकृतं समयोल्लङ्घनरूपात्मावग्राहं[3] तस्मै तद्धेतुं निजगदुः । तदाकर्ण्य गोमुखः राज्ञः समीपम् आगत्य नरवाहनदत्तादिभ्यः सर्वं तत् न्यवेदयत् । तच्चाकर्ण्य विस्मितो राजा ताः कुमारिकाः रक्षितुं वायुवेगयशसा प्रार्थितः सर्वैः सह तत्र गत्वा पुरः प्रज्वालितानलाः चतस्रः राजकुमारिकाः पश्यन् वायुपथराजानुजया निजगदे—'देव, एषा एका कालकूटपतेः सुता कालिका नाम; द्वितीया च विद्युत्पुञ्जात्मजा विद्युत्पुञ्जा; तृतीया चैषा मन्दरस्य सुता मतङ्गिनी, चतुर्थी च पद्मप्रभानाम्नी महादंष्ट्रसुता, पञ्चमी चाहम्; एवं वयं

---

१. 'कर्मव्यतिहारे णच् स्त्रियाम्'; 'णचः स्त्रियामञ्'; 'न कर्मव्यतिहारे' ।
२. 'अभिविधौ भाव इनुण्' । ३. 'आक्रोशे अवन्योर्ग्रहः' ।

सर्वाः सिद्धक्षेत्रे तपस्यन्तं भवन्तं दृष्ट्वा मारमोहिताः मिथः समयं व्यदधम यत् पञ्चभिः अस्माभिः अयमेव प्रियः पतीकरणीयः । भिन्नया च न कयाचिदस्मै आत्मा समर्पणीयः । कुर्वन्त्यां च तथा एकस्याम् अन्याभिः सखीद्रुहं तामुद्दिश्य वह्निः प्रवेष्टव्यः । अतः एतत्समयभीता अहं पृथक् परिणयं न ऐच्छम्, अधुनापि च तुभ्यमात्मा न समर्प्यते इति लोकपालसाक्षिणि अस्मिन् मदीये समये सर्वाः एताः मम अविवाहिताः सखीः उपयम्य एताभिः सह अहं निरुद्द्रावो[1]च्छ्राय[2]वता भवता अनुग्रहणीया । इत्थं तया उक्ते मरणविरताः कुमार्यः परस्परं समाश्लिष्यन्त्यः तुतुषुः । राजा चापि निरतिशयं जहर्ष । तत्पितरोऽपि च तत्सर्वम् अवगत्य तत्क्षणं तत्र आगताः तस्मै नरवाहनदत्ताय यथाविधि सर्वाः ताः ददुरिति पञ्च गजाप्लावाः[3] विद्याधरात्मजाः समवाप्य वत्सेशसुतः परं माहात्म्यम् उपगतवान् ।

147. एवं तत्र ताभिः सह चिरं वर्तमानं नरवाहनदत्तम् एकदा हरिशिखः सेनापतिः उवाच, 'देव, शास्त्रज्ञोऽपि भवान् कथमधुना समुल्लङ्घितनीतिनियमः विग्रहावसरे अनवग्रहग्रहाय[4] कामाय भोगप्रसरावसरं ददाति ? क्व मन्दरदेवं जेतुं त्वदीयो यात्रोद्योगः, क्व च इयन्ति दिनानि इह अन्तःपुरैः सह ते विहारः ? हरिशिखेन इत्थम् उक्तो महाराजो जगाद, 'हरिशिख, युक्तमुक्तं भवता । किन्तु न मे अत्र कोऽपि भोगाय उद्योगः । अयं हि भार्याप्राप्तिकरः अधुना अरिमर्दे सहायकः इति मया अभिनन्दितः । अद्यैव च तुलाप्रग्राह[5]वन्तो वणिजः स्वकीयक्रयसिद्धये इव विमुक्तप्रगाहा[6]श्वाः मदीयसैनिकाः अरिपरिभावाय[7], निजविजय[8]सिद्धये च गच्छन्तु' । एवम् उक्तवन्तं राजानं श्वशुरो मन्दरो जगाद 'देव, दूरदुर्गमभूमिष्ठः अयं मन्दरदेवः । असिद्धचक्रवर्त्यङ्गसर्वरत्नेन च न केनापि जेतुं शक्यते । अयं हि देवमाय - महावीरसुररक्षितद्वारदेशायां त्रिशीर्षाख्यगुहायां सुरक्षितो वर्तते । तत्र च देव, चक्रवर्तिरत्नं चन्दनपादपो वर्तते । तस्य च तरोः

---

१-२. 'उदिश्रयतियौतिपूद्रुवः' (अविनश्वरैश्वर्यशालिनेत्यर्थः) । ३. 'विभाषाङि रुप्लुवोः' । ४. 'अवे ग्रहो वर्षप्रतिबन्धे' । ५. 'प्रे वणिजाम्' । ६. 'रश्मौ च' । ७. 'परौ भुवोऽवज्ञाने' । ८. 'एरच्' ।

निकटम् अचक्रवर्तिजनः गन्तुं न शक्नोति अतः त्वं स्वाभीष्टसिद्धये तं समाराधय । मन्दरात् इत्थम् आकर्ण्य निराहारो निष्प्रावारो[1] यतव्रतो नरवाहनदत्तो रात्रौ तं चन्दनतरुं गच्छन् सुदारुणेभ्यो विघ्नेभ्यो वित्रास्यमानोऽपि तस्य तरोः मूलम् अवाप्य निबद्धोत्तुङ्गवेदिकं महारत्नं तं सोपानैः अध्यारुह्य ववन्दे । तेन च अतिप्रसन्नः तरुः, 'चक्रवर्तिन्, अयमहं ते सिद्धः चन्दनवृक्षः, स्मृतमात्र एव च अहं त्वां सन्निधास्ये । त्वम् अधुना इतः गोविन्दकूटं व्रज तत्र अन्यान्यपि रत्नानि ते सिद्धिम् गमिष्यन्ति येन अचिरम् एव ते मन्दरदेवविजयनिश्चयः'[2] एवम् अशरीरिण्या वाचा तम् उवाच । एतेन चातिहृष्टो नरवाहनदत्तः 'तथेत्युक्त्वा' सिद्धिमान्, कृतदिव्यपादपप्रणतिः निजकटकम् आयातः तां निशां अतिवाह्य प्रातः आस्थाने अखिलेभ्यः साधितचन्दनतरुवृत्तान्तम् आचख्यौ । ततः सर्वाभिः स्वदयिताभिः सर्वैः निजसचिवादिभिश्च सह सम्मन्त्र्य मन्दरदेवदर्पं दरीतुकामः चन्दनतरुप्रतिपादितान्यरत्नसिद्धये दिव्येन विमानेन गोविन्दकूटगिरिं समाससाद ।

148. तत्र चैकदा आस्थानमण्डपगतं चक्रवर्तिनं नरवाहनदत्तं व्योममार्गेण अमृतप्रभसंज्ञकः विद्याधरः, यश्च अग्निपर्वते शत्रुक्षिप्तम् एनं भयाद् रक्षितवान् आसीत्, समागत्य दत्तनिजपरिचयः सप्रीतिस्वीकृतराजातिथ्यादरातिशयः प्राब्रवीत्—'देव, दक्षिणादिग्वर्ती मलयाख्यो महागिरिः अस्ति । तत्र एकस्मिन् आश्रमे वामदेवनामा महान् ऋषिः अस्ति । स त्वाम् कस्यचित् कार्यस्य हेतोः एकाकिनम् आह्वयति इति तेन अहम् इह प्रेषितः । त्वञ्च मदीयः पूर्वार्जितः प्रभुः इत्यहम् इह आयातः । तद् एहि, तस्य मुनेः अन्तिकं शीघ्रं सिद्ध्यै साधयावः' । तेन विद्याधरेण एवम् उक्तः नरवाहनदत्तः 'तथा' इत्यभ्युपगत्य, तत्रैव भार्याः सेनाश्च संस्थाप्य, नभोमार्गेण क्षिप्रं मलयाचलम् अवाप्य वामदेवम् अभ्युपगतः जरसा पाण्डुरम्, प्रांशुशरीरम् नेत्रकुहरस्फुरत्तारकमणियुगमम् विद्याधरेन्द्ररत्नस्थानम्, समुल्लसज्जटालतम्, सिद्धिसाहाय्यहेतोः सहागतं हिमाद्रिम् इव अवलोक्य तस्य मुनेः चरणौ ववन्दे । सोऽपि च प्रदर्शितात्यातिथ्यादरः राजानम् एवम् अभाषत, 'पुरा पुरारातिना कामरूपेण दग्धोऽपि त्वं रत्या तोषितेन

---

१. 'वृणोतेराच्छादने' । २. 'ग्रहवृदृनिश्चिगमश्च' ।

शम्भुना सर्वविद्याधरेन्द्राणां चक्रवर्ती विनिर्मितः। मम च एतस्मिन् गम्भीरान्तर्गुहान्तरे आश्रमे विविधानि रत्नानि सन्ति, मदादिष्टानि तानि साधयित्वा त्वं गृहाण। एवं सिद्धस्य ते मन्दरदेवो जेतव्यो भवेत् एतदर्थमेव गिरिशाज्ञया त्वं मया इह समाहूतः'।

149. तेन मुनिना इत्थमुक्तो नरवाहनदत्तोऽतिहृष्टः तां गुहां प्रविश्य विजिततत्रत्यविघ्नौघः अभिधावन्तं मत्तगजेन्द्रं दृष्ट्वा प्रदत्ततन्मुखमुष्टिप्रहारः दन्तस्थापितपादो लाघवेनैव तं मत्तगजेन्द्रं समारुरोह। तदानीम् एव, 'साधु सिद्धं चक्रवर्तिनस्ते महाहस्तिरत्नम्' इत्येषा अशरीरिणी वाणी गुहामध्याद् उदभूत्। ततः अहीन्द्राभं खड्गम् एकमवलोक्य स तत्खड्गरत्नं चक्रवर्तित्वलक्ष्म्याः केशपाशमिव अग्रहीत्। येन 'साधु भोः जैत्रं खड्गरत्नं ते सिद्धम्' इत्यशरीरिणी वाक् पुनः गुहाभ्यन्तरे समुदपद्यत। ततश्चन्द्रिकारत्नं, तदनन्तरं च कामिनीरत्नम् एवं विध्वंसिनीनाम्ना प्रसिद्धं विद्यारत्नं च सोऽसाधयत्। इत्थं साधितकार्यकालोपयुक्तमाहात्म्यप्रदरत्नः स गुहातः निर्गत्य तस्मै वामदेवर्षये सिद्धं सर्वं प्रशशंसेति प्रीतो मुनिः तं सिद्धमहाचक्रवर्तिरत्नं जगाद, 'पुत्र, कैलासोत्तरपार्श्वस्थितं मन्दरदेवम् अधुना त्वं विजित्य ऊर्जितसाम्राज्यश्रियं भुङ्क्ष्व' इति।

150. वामदेवेन इत्थमुक्तः सिद्धकार्यः नरवाहनदत्तः कृततन्मुनिस्तवः अमृतप्रभेण सह व्योम्ना प्रस्थाय अह्नाय गोविन्दकूटस्थं श्वश्वा महाप्रभावक्त्या धनवत्या अभिरक्षितं स्वशिबिरं प्राप। तत्र गृहीतविश्रम्भ पृच्छद्भ्यो जनेभ्यो वामदेवर्षिदर्शनम् तदादेशेन गुहाप्रवेशम् रत्नानां सिद्धिश्च सर्वं शशंसेति वाद्यमानतूर्यो नृत्यद्विद्याधरीकस्तत्र महोत्सवाभिनन्दितः सर्वो जनोऽजायत।

151. परेद्युः विजयाशंसिनि लग्ने द्विजेभ्यः प्रदर्शितादरः कृतमङ्गलो ब्रह्मनिर्मितं शर्वदत्तं विमानम् आरुह्य मन्दरदेवं विजेतुं ससैन्यान्तःपुरसमन्वितो नरवाहनदत्तः सेनापतिहरिशिखादेशानुविधायिभिः चण्ड-

सिंहपिङ्गलगान्धारवायुपथविद्युत्पुञ्जादिभिः निजानुचरैः सह रणाय[1] प्रतस्थे इति प्रचलद्विद्याधरसामन्तचक्रसेनाच्छन्नगगने तत्तेजोनिह्नुतप्रभः प्रभाकरो लज्जया इव निममज्ज। ततो देवर्षिगणसुसेवितं दिव्याङ्गनोद्यानं गण्डशैलम् अतिक्रम्य स्फटिकापाण्डुरत्विषः कैलासभूभृतो मूलमवाप। तत्र च मन्दाकिनीतीरे स्थापितनिजसेनापरिच्छदं तं विद्याधराधिपधीमान् मन्दर उवाच 'देव, अनेकविघ्नं[2] कैलासप्रस्थं[3] समुल्लङ्घ्य अग्रतो गन्तुं न योग्यम्। हरास्पदस्य एतस्य हि लङ्घनेन विद्याः नश्यन्तीत्यस्य त्रिशीर्षगुहामुत्तरेण गन्तव्यम्। सा च गुहा देवमायाभिधानेन राज्ञा अभिरक्ष्यते। स राजा चातिदृप्तः इति तम् अजित्वा पुरो गमनम् अयोग्यम्। मन्दरेण एवम् उदितः धनवत्या चानुमोदितः नरवाहनदत्तः तं वासरं तत्रैव स्थितः आदौ सामप्रयुक्तये कृततत्कृत्योपजापाय देवमायाय दूतं प्राहिणोत्। देवमायश्च, किन्तु, शाम्ना तच्छासनम् अप्रतिपद्यमानः युद्धाय समनह्यत्। अतः अपरेद्युः सन्नद्धेः तैः तैः स्वस्वराजैः सह स चक्रवर्ती तं देवमायारिघासं[4] समूलम् उन्मूलयितुं प्रतिप्रायात्। देवमायोऽपि च तत्सर्वं बुद्ध्वा योद्धुं सन्नद्धो वराहवज्रमुष्ट्यादिभूरिभूपतिसमन्वितः आभ्यमित्रम् अभ्युज्जगाम इति उभयसेनासङ्घातसमाच्छादिताम्बरः, छिन्नभूरिशिरःश्रेणिकरकावर्षभीषणः, सवीरगर्जनः, घोरो रणघनागमः समजायत। तत्र चण्डसिंहो देवमायस्य अग्रयोधं सेनान्यं वराहं जघान। अमायिना च नरवाहनदत्तेन मायी देवमायः शरैः सव्यधो[5] रणे मूर्च्छितो बद्धः अक्रियत। बद्धे च तस्मिन् वज्रमुष्टिमहाबाहुप्रभृतिभिः सह तत्सैन्यम् अभज्यत इति विमानस्थाः, साधु! साधु!! इति स्वानवन्तो[6] देवा, विजयिनः तस्य जयस्वनं[7] चक्रुः। अथ संयतानीतं तम् आश्वासननिगदैः[8] सान्त्वयित्वा नरवाहनदत्तः ससङ्घ[9] देवमायम् अनुगृह्य अमुञ्चत्। सोऽपि च तद्बाहुजितः वज्रमुष्ट्यादिभिः सार्द्धं प्रणतः तस्य शासननियमान्[10] प्रत्यपद्यत।

---

१. 'वशिरण्योरुपसंख्यानम्'। २-३. 'घञर्थे कविधानम्'। ४. 'घञपोश्च' इति अदो घस्लादेशः। ५. 'व्यधजपोरनुपसर्गे'। ६. 'स्वनहसोर्वा'। ७. 'स्वनहसोर्वा' इति घञभावे अप्। ८. 'नौ गदनदपठस्वनः'। ९. 'सङ्घोद्घौ गणप्रशंसयोः' (सबलमित्यर्थः)। १०. 'यमः समुपनिविषु च'।

152. अथैवं प्रवृत्ते सङ्ग्रामनिवृत्तिसूचककोणाघातनिक्वाणे[1] शान्ते च उभयसैन्याहवे[2]हवे[3], व्यपगते च तस्मिन् अहोरात्रे प्रातरास्थानमायातः। देवमायः, अधीश्वरेण तेन त्रिशीर्षगुहाम्नायं पृष्टो यथातथ्यम् एवमवर्णयत्—देव, पुरा विद्याधरवराश्रिते भिन्नसाम्राज्ये कैलासस्य दक्षिणोत्तरे द्वे पार्श्वे अभूताम्। तत्र संयम[4]पूर्वककृततपस्तुष्टेन शम्भुना ऋषभाख्यः चक्रवर्ती भवितुं प्रदिष्टः स च जातूत्तरं पार्श्वं गच्छन् कैलासमुदलङ्घयत् इति अध्वस्थितहरक्रोधात् भ्रष्टविद्यः दिवः अपतत्।

153. ततः स देवान्नादोऽपि तदानीम् अन्यादो[5] निर्निनदो[6]ऽपि समाकर्णितकाननपतत्रि-श्वापदनिनादो निर्निगदोऽपि श्रुतिविषयीकृतसशिष्यमुनिगणनिगादो[7]ऽत्युग्रेण तपसा पुनः हरम् आराध्य सन्तुष्टात् तस्मात् उभयोः पार्श्वयोः चक्रवर्तित्वम् अयाचत इति पिनाकभृत् तस्य उत्तरदक्षिणोभयपार्श्वगमनसौलभ्याय कैलासं भित्त्वा महागुहाविवरं चक्रे। एवं विद्धः कैलासः समुद्विग्नः, 'भगवन्, एतन्मदीयम् उत्तरपार्श्वं मानुषागम्यम् इति अनया गुहया तत् पार्श्वं तद्गम्यं सञ्जातम् अतः हे देव, तथा कुरु येन मदीया एषा मर्यादा न भिद्येत'। कैलासेन इत्थं विज्ञप्तः हरः दिग्दन्तिदृग्विषाहीन्द्रगुह्यकान् रक्षकान् गुहायां स्थापयामास। दक्षिणे विद्याधरेश्वरम् महामायम्, उत्तरे च अपराजिताम् चण्डिकाम् कालरात्रिं स्थापयन् कृतगुहारक्षो हरो महारत्नानि समुत्पाद्य तत्र इमां व्यवस्थाम् आदिदेश यत् इयं द्विपार्श्वीसिद्धरत्नस्य चक्रवर्तिनः सद्भूतानां सदाराणां तदनुज्ञातानां राज्ञाञ्च गम्या भविष्यति, नान्येषाम्। त्र्यक्षे इत्थम् आदिष्टवति, समये समये, विद्याधरीसार्यमाणवीणाप्रक्वाणम्[8] आकर्णयन् तत्र ऋषभकः साम्राज्यं कुर्वन् अपि दर्पमूलकपणान्[9] इव निजप्राणान् वज्रिणे ददौ। एष च त्रिशीर्षाख्यगुहायाः अस्याः आगमः या च युस्माहक्षैर्विना-

---

१. 'क्वणो वीणायाञ्च'। २. 'आङि युद्धे'। ३. 'भावेऽनुपसर्गस्य' इति ह्वयतेरप् सम्प्रसारणं च; शब्दे इत्यर्थः। ४. 'यमः समुप०'। ५. नितराम् अदनं न्यादः, 'नौ ण च' तद्रहितः, निरशन इति भावः। ६. 'नौगदनद०' निःशब्द इत्यर्थः। ७. 'नौगदनद०' निगादो वचनम्। ८. 'क्वणो वीणायाञ्च'। ९. 'नित्यं पणः परिमाणे'।

धनजनमर्द्दैः[1] अन्यैः अगम्याः। तस्य च एतद्गुहारक्षिणः महामायस्य कुले कालानुक्रमेण जातः देवमायनामा अहम् मम जन्मनि दिव्या सरस्वती सप्रमदाय[2] सप्रमदाय[3] मदीयजनकाय व्याजहार यद् विद्याधरेषु जातः अयं मृधे रिपुभिर्दुर्जयः। यश्च अमुं जेष्यति नूनं स चक्रवर्ती भविष्यतीति। तेन अस्य स्वामिना अमुना अनुवर्त्येन प्रभुणा च भाव्यम्। सोऽहं त्वया जितः अतः भवान् कैलासोभयपार्श्वैकचक्रवर्ती प्रभाववान् अस्माकं प्रभुरिति त्रिशीर्षगुहाम् एतां तीर्त्वा निजबलवशीकृतं शेषाहितसमाजम्, अजः स्वसमजम्[4] उदजेन इव, समजतु[5]।

154: देवमायेन इत्थम् उक्तश्चक्रवर्ती जगाद यद्वयमद्य गुहाद्वारमासाद्य तत्र वसामः, प्रातः कृतसम्विधयश्च तां गुहां प्रवेष्टास्मः इति। एवमुक्त्वा नरवाहनदत्तः अन्योऽन्योपहवैः[6] आहव[7]सम्मिलितैः सर्वैः राजभिः सह तत्र गत्वा गुहाद्वारमावसन् निरालोकान्तर्भागां पुञ्जीभूतकल्पान्तघनतामिस्रामिव स्थिताम् अनर्केन्दुरश्मिप्रवेशां तां गुहाम् आलुलोके। द्वितीयेऽह्नि कृततत्सपर्यो ध्यातोपनतसद्रत्नसहायः सपरिच्छदः सः, चन्द्रिकारत्नैः तत्रत्यतमांसि, चन्दनेन च अहिदृग्विषान्, हस्तिरत्नेन दिग्गजान्, खड्गरत्नेन च गुह्यकान्, अन्यैः रत्नैरन्यान् विघ्नान् च निवार्य सेनया सह अमूम् उत्तीर्णवान्। ततश्च उदग्द्वारेण विनिर्गच्छति तस्मिन् 'चक्रवर्तिन्, रत्नप्रभावात्ममाहात्म्येन त्वया एषा गुहा तीर्णा' इति दिवो वागुदभूत्। अथ धनवती देवमायश्च तं प्रभुम् ऊचतुः यत् 'एतद्गुहाद्वारे सर्वदा कालरात्रिः सन्निधत्ते सा च अमृतं जिहीर्षूणां दानवेन्द्राणां वध[8]कारिणी विष्णुना अमृतमन्थने पूर्वम् उत्पादिता। सैषा एतां गुहां रक्षितुं शर्वेण समादिष्टा येन यथोक्तैः त्वादृशैः विना अन्यो न कश्चित् तरेत् इति। चक्रवर्ती सिद्धरत्नः त्वं च इमां गुहां तीर्णवान् इत्येषा विजयसिद्धये त्वया अवश्यम् अर्चनीया'। एवं धनवतीदेवमायोक्तस्य तस्य नरवाहन-

---

१. 'मदोनुपसर्गे'। २. प्रमदया सहिताय। ३. 'प्रमदसम्मदौ हर्षे'। ४. 'समुदोरजः पशुषु' (समजः पशूनां सङ्घः, उदजः पशूनां प्रेरणम्)। ५. अज गतिक्षेपणयोः इत्यस्मात् लोट्। ६. 'ह्वः सम्प्रसारणं च न्यभ्युपविषु'। ७. 'आङि युद्धे'। ८. 'हनश्च वधः'।

दत्तस्य वासरः तत्र अक्षैपीत् । कैलासोत्तरसानवश्च समासन्नसङ्ग्राम-रुधिरोक्षिता इव सन्ध्यारुणा अराजन्त । तस्य राज्ञः सर्वं बलं समुपलब्ध-बलस्तमोघनो[1] गुहागृहरूपं सद्यो वैरमिव स्मरन् तदानीम् आवृणोत् । आयसोद्घन[2]घनोरस्कभूतादिगणः कालरात्रिक्रोधाङ्कुरः इव आविर्बभू-वेति क्षणेनैव नरवाहनदत्तमतिरिच्य सर्वं तत्सैन्यं शीतलीभूतापघनं[3] निःसञ्ज्ञं संजज्ञे । तदवलोक्य अनर्चाद्दुर्मनायमानकालरात्रिविजृम्भितं तत् सर्वम् अवगत्य नरवाहनदत्तः तद्गुहाद्वारोपप्रघणस्थ[4]तत्रत्यभूभृदुपघ्न[5]-निघत[6]रूपलब्धिमा[7]नुप्त्रिमपक्त्रिमफलपुष्पैः तामर्चयन् इत्थं तुष्टाव, 'देवि, त्वं हि प्राणिनां प्राणशक्तिः; तेषां सञ्जीवनी चेति त्रिभुवनं त्वम् एव आश्वासयसि । दुष्टदुरितद्रुमस्तम्बघ्न[8]द्रुघण[9]परिघ[10]पाणिदुर्गा त्वमेवेति जगदुत्पत्तिस्थितिनाशहेतवे तुभ्यं नमः' । किन्तु इत्थं स्तुता अपि यदा कालरात्रिः सा न तुतोष तदा स्वमूर्द्धोपहारेण स ताम् आर्चिचिषत् इति स्वशिरश्छेत्तुं समुपात्ताट्टहासोद्घ'[11] तुष्टा देवी तत्क्षणम् अवोचत्, 'पुत्र, साहसं मा कार्षीः एषा अहं ते सिद्धा । अचिरेणैव तव एतद्बलं प्रकृतिस्थं भवतु, विजयञ्च त्वम् आशु प्राप्नुयाः' । एवं तस्याम् अभिदधत्या-मेव सर्वं तत् नरवाहनदत्तबलं पल्यङ्क[12]सुप्तप्रबुद्धमिव सञ्जातम् इति सर्वास्तद्भार्याः, वयस्याः, अन्ये विद्याधराश्च अनाप्तसमानन्दथवः[13] तस्य चक्रवर्तिनः आत्मीयजनरक्षण[14]यत्नविशिष्टं तं प्रभावं मुहुर्मुहुः प्राशंसन् । वीरो नरवाहनदत्तश्च तदानीं विहिताहारपानाद्यावश्यकक्रियोऽनुभूततद्रा-त्रिप्रियस्वप्नः[15] कालरात्रिं प्रातः विधिना[16] अनाधिरभ्यर्च्य पयोधि[17]

---

१. 'मूर्तौ घनः' । २. उद्घनोऽत्याधानम्' । ३. 'अपघनोऽङ्गम्' । ४. 'अगारैकदेशे प्रघणा प्रघाणश्च' । ५. 'उपघ्न आश्रये' । ६. 'निघो निमितम्' (समारोहपरिणाहवन्त इत्यर्थः) । ७. 'ड्वितः क्त्रिः'; 'क्त्रेर्मम्नित्यम्' । ८. 'स्तम्बे क च' । ९. 'करणेऽयोविद्रुषु' । १०. 'परौ घः' । ११. सङ्घोद्घौ गणप्रशंसयोः' । १२. 'परेश्च घाङ्कयोः' । १३. 'ट्वितोऽथुच्' । १४. 'यजयाचयतविच्छप्रच्छरक्षो नङ्' । १५. 'स्वपो नन्' । १६. 'उपसर्गे घोः किः' । १७. 'कर्मण्यधिकरणे च' ।

गाम्भीर्यनिधिः विरुद्धविद्याधरानिरुद्धाध्वानं धूमशिखं प्रतिप्रायात् इति मन्दरदेवीयप्रधानेन तेन सह चक्रवर्तिनः तस्य तादृशं जन्यमजनि यत् सर्वतो व्योम खड्गमयमिव, मही च शूरमूर्धमयी इव, आहवहवश्च 'जहि जहीति जहि, मा जहिहि, जहीहि जहाहि' इत्युग्रवीरवाक्यमय इव अभवत्। आसायं कालं प्रवर्तमाने एवं सेनयोरुभयोर्युद्धे चक्रवर्ती, धूमशिखं युद्धे बद्ध्वा शान्तधूमशिखोद्रेकम् अग्निदग्धेन्धनमिव कृत्वा निजशासनं ग्राहयामास।

155. द्वितीये अहनि च अग्रतो योद्धुमायान्तं मन्दरदेवं चारेभ्यो ज्ञात्वा किञ्चिद्दूरं गतः अग्रे बहुराजगणसैन्यसञ्चिति रचितव्यूहम् अग्रतः समागतं तम् अवलोक्य स्वपक्षीयराजन्यककारितप्रतिव्यूहरचनो नरवाहनदत्तः अरेर्बलमधावत् इति प्रलयकालोद्वेलजलधिक्षुभितजलौघानुकारिणोः उभयोः सेनयोः आहवो भयावहोऽवर्तत। एकतश्चण्डसिंहाद्याः महारथाः अन्यतश्च काञ्चनदंष्ट्राख्यप्रभृतयः शूराः युध्यन्ते स्म इति विक्षोभितकुलक्ष्माभृत्प्रकम्पितत्रैलोक्यः अवालोक्यः विजजृम्भे सङ्ग्रामः।

156. तत्र सर्वविद्याधरसैनिकानाम् अग्रेऽध्यायं[1] युध्यमानस्य नरवाहनदत्तस्य प्रथमतः स्थित्वा प्रतियुध्यमानस्य मन्दरदेवस्य च परस्परं भीरुङ्कारम्[2] आक्रोशताम् अलमेवंकारम्[3] पलायितेन इति न्यक्कारपूर्वकम् अरिवेदं[4] प्रहरताम् यावद्वेदम्[5] आहतानां च सैनिकानां निर्भरभरितसकलत्रिभुवनोदरो महान् उदभूद् रणारवः[6]। तं च प्रलयकालविजृम्भितमहाभैरवम् आरवम् आकर्ण्य रणरसेन बद्धविकटरोमाञ्चकवचेन प्रेर्यमाणो विजृम्भितातिभीषणभ्रकुटिसङ्कटायमानललाटभित्तिर्नरवाहनदत्तोऽमर्षदष्टदन्तच्छदः[7] उत्पाततडिल्लतानुकारिणा कृपाणेन काँश्चिदरिसैनिकान् समूलघातं[8] निहत्य इतरान् पादघातम्[9] अवधीत्। चण्ड-

---

१. 'विभाषाऽग्रे प्रथमपूर्वेषु'। २. 'कर्मण्याक्रोशे कृञः खमुञ्'। ३. 'अन्यथैवं कथंमित्थंसु सिद्धाऽप्रयोगश्चेत्'। ४. 'कर्मणि दृशिविदोः साकल्ये'। ५. 'यावति विन्दजीवोः'। ६. 'विभाषाऽऽङिरुप्लुवोः'। ७. 'पुंसिसंज्ञायां घः प्रायेण', 'छादेर्घे द्व्युपसर्गस्य'। ८. 'समूलाकृतजीवेषु हन्कृञ्ग्रहः'। ९. 'करणे हनः'।

सिंहेनापि च सह युध्यमानेषु प्रतिभटेषु दावानलावलीढद्रुमः इव तत्क्रोधानलावलीढः कश्चिद् ऊर्ध्वशोषम्[१] अशुषत्, अन्यो हस्तग्राहं[२] गृहीतः अजकनाशम्[३] अनशत्। कश्चिच्च स सरित्पूरो द्रुममिव समूलकाषम्[४] अकषत् इतरं च जीवग्राहं[५] गृहीत्वा महोपलम् अयोघन इव रूक्षपेषम्[६] अपिनट्। कारावन्धं[७] बद्धांश्च कांश्चिद् धनपोषम्[८] अपुष्णात्, पृतनानिष्क्रामं[९] यष्टिग्राहम्[१०] अस्यपगोरं[११] वीरःप्रतिपेषं[१२] केशग्राहञ्च[१३] युध्यमानान् अन्यान् द्व्यङ्गुलोत्कर्षम्[१४] अच्छिनत्।

157. इत्थं घोरे तस्मिन् रणे अभिधावितः चण्डसिंहः काञ्चनदंष्ट्रेण भीमया गदया मूर्ध्नि अभिजघ्ने इति गदाहति[१५]पतितं तं दृष्ट्वा धनवती निजविद्याबलेन शप्त्वा उभे सेने निश्चेतने अकार्षीत्। नरवाहनदत्तो मन्दरदेवश्च इमौ एव उभौ तदानीं सचेतनौ अतिष्ठताम्। इत्थं धनवतीं तदानीं क्रुद्धां जगद्गीर्णि-लूनि-धूनि-क्षमाम् अक्षमां वीक्ष्य दिक्षु देवा अपि दुद्रुवुः। मन्दरदेवश्चाथ चक्रवर्तिनरवाहनदत्तम् एकाकिनं दृष्ट्वा उद्गूर्णायुधः तम् अभ्यधावत्। अतो नरवाहनदत्तोऽपि विमानादवतीर्य उत्खातखड्गरत्नो जवात् तं प्रतिजग्राह। मन्दरदेवश्च तदानीं मायया जयमिच्छन् मदोन्मत्तमातङ्गरूपं चक्रे इति विद्यातिशीतिशाली नरवाहनदत्तोऽपि तज्जनैः स्वमायया सुमहासिंहाकृतिरदृश्यत क्षणानन्तरं च मुक्तमातङ्गवपुषा मन्दरदेवेन परित्यक्तसिंहाकृतिः नरवाहनदत्तः युध्यमानः साक्षात् जयमिव खड्गं मन्दरदेवस्य करात् युक्त्या आहरत् इत्यपशस्त्रं बाहुभ्यां युध्यमानं मन्दरदेवं गृहीतगुल्फो नरवाहनदत्तः क्षितौ निपात्य तद्वक्षोविन्यस्तचरणः समाकृष्टकेशः असिना चिच्छिषस्तस्य शिरश्छेत्तुं यावदुदयुङ्क्त तावदेव मन्दरदेवीनाम्ना कन्या तत्स्वसा तम् अभ्यु-

---

१. 'ऊर्ध्वे शुषिपूरोः'। २. 'हस्ते वर्तिग्रहोः'। ३. 'उपमाने कर्मणि च'। ४. 'निमूलसमूलयोः कषः'। ५. 'समूलाकृतजीवेषु हन्कृञ्ग्रहः'। ६. 'शुष्कचूर्णरूक्षेषु पिषः'। ७. 'अधिकरणे बन्धः'। ८. 'स्वे पुषः'। ९. 'अपादाने परीप्सायाम्'। १०. 'द्वितीयायाञ्च'। ११. 'अपगुरो णमुलि'। १२. 'परिक्लिश्यमाने च'। १३. 'समासत्तौ'। १४. 'प्रमाणे च'। १५. 'स्त्रियां क्तिन्'।

पेत्य तद्विशसनं निवारयन्ती अब्रवीत् — 'तपोवनस्थः त्वं दृष्ट्वैव प्राक् मया भर्त्ता कल्पितः अतः राजन्, मदीयं भ्रातरं, निजश्वशुर्यम् इमं मा वधीः'। तया इत्थम् उक्तः नरवाहनदत्तः मन्दरदेवम् उवाच—विद्याधरेश, त्वमधुना मया मुक्त इति रणे शूराणां जयपराजययोः प्रतिष्ठाचाञ्चल्यम् अवधार्य मा लज्जिष्ठाः। राज्ञा इत्थम् उक्तः नातिप्रह्वश्रिः मन्दरदेवो जगाद— 'आहवे स्त्रिया रक्षितेन, गर्हितेन मदीयेन जीवनेन इदानीं किमिति वनस्थस्याहं पितुरन्तिकं यामि। त्वमेव चात्रत्यश्चक्रवर्ती निर्मितः अयमेवार्थश्च मदीयेन पित्रापि असूच्यत'।

*मन्दरदेवस्य तपोवनगमनम्*

158. इत्थम् उक्त्वा कृतप्रस्थितौ[1] मानिनि मन्दरदेवे, संयदवसातौ[2] गगनस्थेषु च देवेषु प्रवृत्तायां चक्रवर्तिविजयोपलक्षितसहर्षध्वनिकीर्ति[3] - स्तुति - सङ्गीतौ धनवती निजं सुतम् उभे सेने च स्वशक्त्या सचेतनयति स्मेति सुप्तप्रतिबुद्धा इव ते सर्वे सचिवादयः द्विषन्तं विजितम् अवगत्य नरवाहनदत्तम् अभिननन्दुः। काञ्चनदंष्ट्रादयश्च मन्दरदेवीयाः राजानः तस्य शासनं जगृहुः। इत्थमवाप्तशर्वाचलोभयपार्श्वसम्पत्[4] नरवाहनदत्तः परां मुदम् आपन्नः अरिविजयोत्सवाहततारतूर्यं प्रजासचिवराजवृन्दवन्दितो रिपुप्रतापमिव मधु पिबन् अनुभूतनिजप्रियजनसमज्या[5]भिषुत्यानन्दः शय्यातलम् अलमकरोत्।

159. प्रातश्चासौ चक्रवर्ती सम्पादिताहर्मुखक्रियः[6] निजबलान्वितः अभ्युत्थाय अग्रगामिनः काञ्चनदंष्ट्रस्य वचनात् कैलाससानुतः विमलसंज्ञकं मन्दरदेवीयं पुरं प्रयातुं समुद्घोषितनिजव्रज्ये[7]च्छो[8] बभूव। तत्र गत्वा चामितगतिं राजानं मन्दरदेवस्य राज्ये अभिषिच्य काञ्चनदंष्ट्रादीन् तदीयान् महीभृतश्च तस्मै समर्प्य स्वीकृततत्कृतपरिचर्यः[9] नवोढया वध्वा

---

१. 'स्थागापापचो भावे'। २-३. 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च'।
४. 'सम्पदादिभ्यः क्विब्वक्तव्यः'। ५. 'संज्ञायां समजनिषद०'—।
६. 'कृञः श च'। ७. 'व्रजयजोर्भावे क्यप्'। ८. 'इच्छा'।
९. 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्'।

